मित्तत्वाभावा न्नयकीति ण्यासी तु स्याद्दोषः गव्यति नाव्यतिद्वत्यादौ तु व्यधिकरणकाषष्ठ्यां चिंत्यो वांता देशः यदि तन्निमित्तस्ये त्यनेन यादिप्रत्ययभिन्ननि मित्तस्यै वेचो वांतादेशव्यावृत्ति रिष्येत तदा स्वाभावि- कस्यै येचो वांतादेशे सिध्यति गव्यती त्यादि सामा न्यस्य व्यावृत्तौ तु नसिध्येदिति तत्त्वप्रकाशिकायां स्पष्टं चकित्तद्वितयो. इति ण्यासी यादौ तद्धितै च वां- तादेशनिषेधे तुवाभव्यं गव्यतीत्यादि न सिध्येत् न. तौतिण्यासी श्रीयते इति नक्तितीति ण्यासी गव्य मि त्यादि च न सिध्येत् वांतोयिप्रत्यये इष्यते इति च कुलं इति च कृते यद्दा इप्रत्यये स्वरबहुल मितिकृते यांतवांतादेशावाहुलका इति सिद्दौ वहूनां वांतवि धीनां वैव्यर्थ्यं तथापि लक्ष्यानुसरणार्थं य इति सुह- दृभूत्वाऽऽचार्य स्तथा न कृतवान् श्रतएव पाणिनीया नां क्वचि त्स्वरवणकार इत्यपास्तं लक्षणस्य चस्मदाद्यु- द्देशेन कृतत्वात् एतदे वैकंचचुष्कायां तं विनालच- णं लक्ष्यदर्शनं मायवनासूयाकर्तव्या श्रवानुगम इ- तिभाष्या दननुगम एव लक्ष्यदर्शनं शरणं सति प्रा- माख्य इति वोध्यं यत्तूक्तं यातो यीत्यस्य तत्सूत्रस्य भाष्या दधातुविषयत्वाद्दातो रित्यारभ्यस्तिथिर्वि ति तद्दातुरित्येतत्सूत्रस्थभाष्यविरुद्धं निर्मूलं च तथा हि प्रकृति सूत्रे भाष्ये एवकारः किमर्थः नियमार्थः नैतदस्ति प्रयोजनं सिद्धे सत्यारम्भमाणउतरेणे यथा

र्नियमार्थं भविष्यति इत्यतोऽवधारणार्थः तर्हि शंक-
च्य मित्यादौ यदि स्यादित्युक्तेः यत्तु, असिद्धं बहि-
रंगपरिभाषाया ऊठ्ग्रहणं ज्ञापकं इति भाष्ये दूषणं
दत्तं ऊठ्ग्रहणं कथं ज्ञापकं प्रौहेत्यादौ विभक्त्युदा
त्तार्थं तदंकरणे ऊड़िदं पदाद्यप्युम्रैद्युभ्यः परासर्व-
नामस्थानविभक्तिरुदात्ता स्यादिति न प्रवर्तते इत्युक्त-
मृतदिष्टापत्ते रदुष्टं वाहःस्थाने य ऊठ् तस्य तेनाय ग्रहण
मितितद्भाष्यतो लाभात् कथ मन्यथा व्यूह इत्यादे-
रनभिधानमिति विभावय ज्वरत्वरेत्यादिविहिता ऊठि
जूः जूरौ तूः तूरौ इत्यादावेव तत्प्रवृत्तेः तदुक्तं परिभा-
षेन्दुशेखरे प्रौह इत्याद्यसाध्वेव वृद्धेः प्राप्ते अन्येतु परि
भाषाश्रयं विना न विधानं वर्णयंति ऊडिदमित्यत्र च-
विदमेवास्तु कोर्थः यस्य दीर्घऊकारो यत्र वाशब्दस्य ह्र-
स्वउकारो यत्र ततःपराऽसर्वनामस्थानविभक्तिरुदा-
त्ता स्यादिति आद्यस्य जूः जूरे त्यादि द्वितीयस्य-
विश्वौह इत्याद्युदाहरणं वश्च वाश्च वौ इंद्वे कृते लो-
पोव्योरिति वलोपः वश्च ऊश्चेति दीर्घह्रस्वयो द्वंद्वे
कृते षष्ठीतत्पुरुषः ववास्थाने यौ दीर्घह्रस्वौ उकारौ
ताभ्यां पराऽ सर्वनामस्थानविभक्ति रुदात्तेति तद-
र्थः योऽयमिदमित्यत्र वादेशः इदमपि समाधानं संदि-
ग्धं क्लिष्टं लोपोव्योरिति सूत्रस्थवकारप्रत्याख्यानपर-
भाष्यविरुद्धं चेत्यरुचे रुक्तं दीर्घोच्चारण मूठोस्यां
परिभाषायां ज्ञापकं संप्रसारणे निमित्तं गुणे . वृद्धि-

रेचीति रुद्धौ विश्वौह इत्यादिसिद्धेरिति तदपिचिं-
त्यं दीर्घोच्चारणाद्वैधत्यूठस्वितिविशेषणार्थस्वशेखरे स्फु
टं जनानयति इति जनौ रित्याद्यर्थं सुक्षागात्ज्वर
त्वरेत्यत्रापि ऊसकरणे यचदुरित्याद्यसिद्धेः इतेनो
डिदमित्यत्रापि ऊसुएवपठ्यते तत्परास्तं किंच चतुर
नुडोनद्यजादौत्यस्याग्रे वाहइतिपठित्वा वाहः परे
नद्यजादौ उदात्ते स्तः इत्यवसिद्धे ऊठ्गहणंव्यर्थमि
त्युक्त्वा वाहानद्या उदात्तविधाना द्वाहइति ङीब्विधि-
रपि नापूर्वइतिभाष्याशयः तस्यापि मंतोदातादुत्तर
पदादन्यतरस्यामनित्यसमास इत्यस्याग्रे पाठेन ज्ञाप
कपरभाष्यप्रामाण्येन तस्य व्यवस्थितविभाषापरत्वा
द्दिष्टसूरसिद्धिरित्युक्तं तदपि न वाह इत्युक्तं ऊडिद-
मित्यचोठोकरणे जूर इत्यादौ सूरासिद्धिः तचोठिकृते
वाह इत्यस्यापि करणे वाह इति ङीब्विधिज्ञापकसि-
द्ध इति लाघवं यद्या याति तथापि अनभिधानमे-
वशरणं तत्रापि कथमन्यथा वाहोङीप्ज्ञापकादूङेति
तक्ष्यताम् तस्यापि यूस्त्र्याख्याविति नदीत्वात् कथं-
वा श्रीमद्भिः प्रवाहैरित्यादौ पदादिवद्भावेन वाहइ
त्यमेन प्राप्तः सरो बाधात् किंच तस्य वाह्यप्रयत्ने इत्य-
स्य वाहइत्यादौ त्वदुक्तव्यवस्थितविभाषाश्रयणं च प्र-
माणं किं चोठ्सूरस्य विश्वौह इत्यादौ दृष्टतज्ज्ञापक-
परभाष्यविरोध एवेति तत्सूराभिधानस्य भाष्यकारा
नभिप्रेतत्व मेव लभ्यत इतिदिक्॥२॥यत्तु विभक्तौ खे-

ति व्यर्थं प्रदेशे क्वचि द्यथायथं सुमिङ्ग्रहणे न सुग्रहणे-
न चेष्टसिद्धेः अनष्ट इत्य च सुपीत्येवास्तु त्यदादीनाम इ-
त्य सुपीत्यनुवृत्तौ यत्र तत्र त्यादा द्यत्वं तुप्राग्दिशीयानां
सुप्स ंज्ञयैव सिद्धे सुपिचेतात्र सुपि यभि इतिन्यासेने-
तर्हीतरादौ अदोषः सुपोधातुिति सुपोलुक् सुप्पिता-
वित्यनुदात्तता च न वतसिलादीनां विधानसाम-
र्थ्यात् तलादीलित्करणाच्चे ति विभाववंतु सुधिय इ-
तुग्रत्त ं तत्र विभक्तिसंज्ञा वलादौ प्रयोजन मिदमस्ति
इदमन्नशादेशे उडिदमिति इदंसुरेण तसउदात्तत्वमि.
ति प्राग्दिशीयइतावभाष्ये स्पष्टं ततस्तृतीयद्वित्व मेत-
द्भाष्यगौरवादिति च कैय्यटे तत्र किं यदुक्तं तलादी-
नां सुप्संज्ञायांसुपोधातुिति लुङ् तेषांविधानसाम-
र्थ्यादिति तन्न तद्धिते सति प्रातिपदिकसंज्ञा तस्यां
च तद्धितलोपइति सन्निपातविघातादेवाऽ लुकसाम-
र्थ्येन अलुक्त मशक्यं अव्ययसंज्ञायां तद्धितांता त्सुपोलु-
क् एवं प्रयोजनसत्वात् तस्मादित्याद्यर्थे तद्दित्यादेः प्र-
योगफलस्य सत्वात् प्राग्दिशइत्यत्रकैय्यटे उक्तं ननु म-
ध्येपवादइतिन्याया दनुदात्तौ सुप्पितावितीयं सूरं वि
भक्तिसूरो बाधते नतु लित्स्वरं लित्स्वर एव तु परत्वाद्विभ-
क्तिस्वरं बाधते नैषदोषः उडिदमित्ये तत्सूत्रं लितीतावा
नुवंत ंते लित्स्वरं बाधित्वा विभक्तिसूरो भवति तृतीया
द्ग्रिहणे न तृतीया मारभ्य प्राग्दिशः प्रत्यायोग्रह्यत इ-
ति किंचे दानीमो मस्येतुसंज्ञानिषेधाय विभक्तिसंज्ञे-

ति स्पष्टं तत्र भाष्ये अन्यथा मिदचोन्त्यादचः पर-
स्मादिति तत्र कैयटे स्पष्टं दानीमोदंतसौकारे दो-
षाभावेपि उक्तस्थले तस उदात्तत्वफलं विभक्तिसंज्ञा-
याः प्रयोजनं इति भाष्ये स्थितं प्राग्दिशीयानां सुप्सं-
ज्ञायां सुप्तिङन्तमिति दानीमोमस्त्येव न जडिदमि
तत्रापि सुबेव संबध्यते सचेकाचइतरत्रापि वि भक्ति
स्थाने सुप्करणादित्यदोष इति चेत्तर्हि अष्टाविंशा-
चरति त्वाचारक्विबंतादष्टनशब्दाल्लटस्तु विभर्ष बाधि-
त्वा परत्वात्प्रतिपदोक्तत्वाद्विभक्तिग्रहणसामर्थ्याद्वा न-
स्यात्त्वे ष्टातीतिकृते तन्न स्यात् तस्मादष्टनइति वि-
भक्तिग्रहणं कार्यं तसादीनां विभक्तिसंज्ञा इष्येति चेन्नि-
त् अथवाऽ एनबासुप्तिङौ इत्येवास्तु तसादीनां सुप्-
संज्ञा वास्तु विभक्तिसंज्ञेति न कार्य मित्यन्ये यदि तु वि-
भक्तिश्च इत्यस्य प्रत्याख्याने तदेवावश्यं तर्हि अतिला-
घवात्प्राग्दिशीयानां माभूत् विभक्तिसुप्संज्ञा किंतु
त्यदाद्यत्वफलाय त्यदादीनामप्राग्दिशीयतसादावेवे-
ति पठ्यतां प्राग्दिशीय इति न कर्तव्यं सुपिचभीति
चंतथा एनदृत्यत्र सुप्तिङेवास्तु दानीमोमस्य यथा
नत्वतथोक्तसैव इत इत्यंतोदात्तमस्तु तत्त्वप्रकाशिका-
यां स्पष्टं॥१॥घुषा घूर्णभ्रमणे अचोपधायां चेति दीर्घे
सिद्धे दीर्घोच्चारणं प्रक्रियालाघवार्थमिति शेखरग्रन्थः
स चायुक्तः मूर्छादिषु दीर्घाकरणे उप लेखकप्रमादेन
दीर्घकरणात् ऊर्ध्वेष्वपि दीर्घोच्चारणं तथैवोपधायां

चेति सूत्रकरण एव लाघवा दृणोतेर्नुंलोपश्च मकृति-
ह्रस्वेतिवचना दूकारस्यैव दीर्घं इत्यलं॥४॥षात्पदां-
तात् पदांतात्षकारात्परस्य नस्य णत्वंनेत्यर्थः नि-
ष्पानं दुष्पानं यत्रकृत्यचइतिवा भावकरणयोरिति-
वा णत्वं प्राप्तं यत्र ।मनोरमायां पदांतात्किं पु-
ष्णातीति प्रत्युदाहृतं तद्युक्तं ष्टुत्वेन सिद्धे
रिति शंका तत्समाधानं तु रषाभ्यामितिसूत्रे
भाष्ये नकारग्रहणमुत्तरार्थं षात्परस्य नस्य ष्टुत्वेन
निर्वाहात् एवञ्च षात्पदान्तादित्यनेनापि ष्टुत्वस्यैव
निषेधः पदान्तग्रहणाभावे पुष्णातीत्यत्र ष्टुत्वनिषेधे
रूपासिद्धि स्स्पष्टै वेति पण्डिताः वस्तुतस्तु नग्रहण-
मुत्तरार्थमिति रषाभ्यामित्यत्र भाष्ये ऽदर्शना द्भाष्य-
सामान्यचिंतया.पदान्तषात्परस्य नस्य णत्वमात्रं नि-
षिध्यत इत्यर्थः नच षणणामित्यत्रापि निषेधस्स्यादि-
ति वाच्यम् पदेऽन्तः पदान्तइत्येवभाष्ये सुसर्पिष्केणे-
त्यादौ णत्वसिद्धये व्याख्यानात् पदस्थनकारस्यैव णत्व-
निषेधात् एवञ्च पदान्तग्रहणाभावे सुसर्पिष्केणे ति
प्रत्युदाहर्तुं सुचितमिति भाष्यदर्शिनः नहि सुसर्पि-
ष्केणे त्यत्र ष्टुत्वं लभ्य मितिदिक्॥५॥ददातिदधात्यो-
र्विभाषा अनुपसर्गादितयोर्विभाषाशः श्याद्व्यधेति ण-
स्यापवादः शपश्चे जुहोत्यादिभ्यश्श्लुः श्लुःश्लाविति
द्वित्वं ददः दधः पक्षे णः दायः धायः इति अनुपस-
र्गादित्येव प्रदः प्रध इति मूलं तत्र पण्डिताः इदं स-

वं मास्तुदद् दाने दध धारणे आभ्यां पचाद्यच् ददः
दधः इति स्याद्यथेति णे युक्ति दायः धाय इति च
सिद्धे रित्याशंक्य समाहितम् अचिकृते न ददः अददः
अत्र नञ्तत्पुरुषे तत्पुरुषेतुल्यार्थतृतीयासप्तम्युपमा-
नाव्ययद्वितीयाकृत्या इत्यनेनाऽव्ययपूर्वपदप्रकृतिस्वर
इष्यते तंवाधित्वा अचकावशक्तौ अजन्तं कान्तं चान्तो-
दात्तं स्या दशक्ता वित्यन्तोदात्त स्यादिति सूत्रम् इ-
ति वस्तुतस्तु समासात्प्रागेवाऽनारब्धत्वादुचकावशक्ता-
वित्यन्तोदात्ते निवृत्ते सति शिष्टत्वेनाऽव्ययपूर्वप-
दप्रकृतिस्वरः सिद्ध एव किन्तु अभ्यस्तानामादिरि-
त्याद्युदात्तार्थं प्रददः प्रदधः इति व्यावृत्त्यर्थं दाञ्धा-
ञोरपि ददधयोः सिद्धार्थं वचनं तदपि रूपद्वय सि-
भाषाग्रहणं विनैवा नुबन्धवैरूप्या द्वासरूपसूत्रेण वा-
श्प्रत्ययाभ्यां सिद्धं विभाषाग्रहणं नानुबन्धकृतमसा-
रूप्यमिति ज्ञापनार्थमिति वासरूपसूत्रे भाष्ये स्पष्ट-
म्॥६॥चितः अन्त इत्यनुवर्त्तते चितोऽन्तइत्ययं अव-
वर्त्तिकम् चितः सप्रकृतेर्बह्वकजर्थमिति शेखरे अस्या-
र्थः चित्प्रत्ययप्रकृते रन्तउदात्त इति तदर्थो नतु प्र-
त्ययमात्रस्यान्त इति अत्र चाकचश्चित्वं ज्ञापक म-
न्यथाऽकच ऐकाच्कत्वेन प्रत्ययस्वरेणैवो दात्तत्वे
सिद्धे तदर्थंव्यर्थं सदवज्ञापकमितितास्यनुदात्तेन्ङि
ददुपदेशाल्लसार्वधातुक मनुदात्तमन्हिङोरित्यत्रशेखरे
तु अस्मात्परंलसार्वधातुकमनुदात्तंङुङ्धोङौवर्ज्ज-

यित्वे त्यर्थः रुणद्धीत्यत्राश्नमोमित्वेन परत्वे त्यस्य बाधे तत्सन्नियोग शिष्टप्रत्ययाद्युदात्त बाधनमित्युक्तम् अयंग्रन्थः परस्य रविरुद्धः यथा मित्त्वेन परत्वे त्यस्य बाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्यापि बाधः एवमकच्यपि प्राक्टेर् इत्यनेन परत्वे त्यस्य बाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्याप्राप्त्याऽकच श्चित्वस्य ज्ञापकतावर्णनमयुक्तमिति विरोधः अर्वाचीनै रित्थं परिष्क्रियते उभयशब्दस्य सर्वादिगणे पाठो व्यर्थइति प्रसङ्गके भाष्यग्रन्थे "कस्येदानीं काकचोः स्वरे रूपे वा विशेषो ऽस्ती"त्युक्त्वा ऽकचि सन्नियोगशिष्टन्यायस्याग्रहणे प्रमाणाभाव इत्यन्यदपि विभावयन्तु सुधिय इति यत्त्वचोक्तं चितःस्थाने चित्प्रत्ययप्रकृतेरन्तोदात्त इतिवार्त्तिकार्थं सन्नशोभनम् चप्प्रभृतिप्रत्ययस्य कुण्डिनजादेरप्रत्ययस्य चेह ग्रहणमिति कैय्यटविरोधात् बह्वकजर्थमितिप्रतीक मुपादाय बह्वणोऽन्तोदात्तत्वे कार्य्ये चितःसप्रकृतेरिति वचनमिति कैय्यटविरोधाच्च बह्वकच्प्रत्ययवती या प्रकृति स्तस्याश्चन्त उदात्तइत्येवार्थो वार्त्तिकस्य एतद्वार्त्तिकप्रत्याख्यानपरभाष्यप्रामाण्या च्चायमर्थः तथाहि तत्तर्हि वक्तव्यं न वक्तव्यं पूर्वसूत्रनिर्दिष्टत्वात् चितइतिषाष्ठ्यं चित्त्वात्समुदायोऽन्तोदात्त इत्यर्थः कुण्डिनजादयोपि व्यपदेशिवद्भावा च्चिदन्ताऽव्यवन्त इतिकैय्यटः चितइत्यनेन चित्त्वतोऽग्रहणे ऽकच एकाच्कत्वेन प्रत्ययस्वरेणै-

वा न्तोदात्तत्वसिद्धे तस्य चित्करणात् चित्त्वत इत्यर्थो
लभ्यते सप्रकृतेरिति बह्वचकार्थं मुपादीयते तेन कु-
ण्डिनप्रकृतिष्वदोष इत्युक्तम् चित इत्यनेन चित्वतो
ग्रहणे पुत्रकाम्यादिषु चित्प्रत्ययान्तेषूपयोगाभावेन
बह्वचार्थ मित्युक्तम् तथैवोदाहृतं च भाष्ये बहुच्
बहुमुत्तमित्यादि यथा च सर्वकैः कतकैरित्यादि च य-
त्तु शेखरयोर्विरोधोद्भावनं तत्र ग्रमो मित्वेन परस्यै-
त्वस्य बाधेऽपि प्रत्यय इत्यस्य प्रकृतिरिष्यत एव प्रत्य-
यत्वं विना लघ्वाकृति शब्देऽस्य संज्ञानापत्तेः प्रत्ययत्वे
चाप्युदात्तः सन्नियोगशिष्टः केनबाध्यं तु अकचि तु
प्राक्टे गृहणा त्वरत्वे त्वस्य बाधेऽकचः प्रकृतिप्रविष्ट-
स्य प्रत्ययत्वे प्रामाण्यफलयो रभावा च्चित इत्यनेन
चित्वतोः प्रकृतिप्रत्यययो रविशेषेण ग्रहणा त्सन्नि-
योगशिष्टन्यायसंचारः काकदन्तपरीक्षावदा भातीति
चित इतिसूत्रे भाष्ये स्पष्टम् ॥८॥ आर्द्धधातुकस्येड्वला
देः षड्संज्ञानिमित्तस्य वलादेरार्धधातुकस्येडितिसू
त्रार्थः अत्रशेखरे आर्धधातुकस्येतिकिम् जुगुप्सते इ-
ति अत्रसूत्रे भाष्ये ऋतइद्धातोरिति पदसुज्ञार्थं वि-
हितस्य वलादेरिति व्याख्ययाऽप्यदोषाभावा दार्ध-
धातुकग्रहणं प्रत्याख्यातम् रुदादिभ्यः सार्वधातुक
इति नियमादाऽऽस्ते शेते इत्यादावदोष इतिस्थित-
म् स्यसिच्सीयुडित्यत्र भाष्ये तु ध्वंस्येडमाभूदित्यार-
र्धधातुके इत्यनुवर्त्य योगविभागमाश्रित्य सा...

संसर्वा ध्यार्द्धधातुकस्येडितुग्रात्तम्
शेखरग्रन्थोऽपि भाष्यविरुद्धः अत्रेत्थं विरोधोद्धारं कु-
र्वन्ति पण्डिताः विधिसूत्रे प्रयोजनं नास्तीति प्रत्या-
ख्यानं योगविभागार्थतया प्रयोजनोक्तिः जुगुप्सत इ-
ति शेखर ग्रन्थस्तु आर्द्धधातुकग्रहणमनुवर्त्त्योक्त इति
अत्रेदं तत्त्वम् स्यसिच्सीयुडितिसूत्रस्थं भाष्यं ताव-
देकदेशिसूत्रकाररीत्या प्रवृत्तम् एवसप्तमेयोगविभागः
करिष्यते आर्द्धधातुकस्येट् यावानिट्नाम स सर्व
आर्द्धधातुकस्य भवतीति विज्ञेयं ततो वलादेरिति
वलादेरार्धधातुकस्येड् भवतीति भाष्यम् आर्द्धधातु-
कस्य इत्यस्य प्रत्याख्याने योगविभागस्यैकदेशयुक्त-
त्वं स्फुटमेव शेखरोपि युक्त एव तथाहि आर्द्धधातुक-
स्येतिसूत्रे भाष्ये किमार्द्धधातुकस्येतिपदाभावे व-
लादेरंगस्या थप्रत्ययस्येडिति विप्रतिपत्तिं कृत्वा य-
द्येतत्पदाभावेऽगस्येडापद्यते तत्पदसत्त्वेपि आर्द्धधं-
धातुकस्य यदंगं तस्येडि त्वापादयितुं शक्यत्वात्त-
थाक्रियमाणएवेष्टं विज्ञास्याम इत्युक्तम् अनेन ल-
घ्ययत्नं सूत्रकारस्यापीति दर्शितम् इदन्तर्हि प्रयो-
जनं इह माभूत् आस्ते शेते एतदपिनास्तिप्रयोजनं
रुदादिभ्यः सार्वधातुके इत्यत्र तन्नियमार्थं भविष्यति
रुदादिभ्यएव सार्वधातुके इड् भवति नान्येभ्य इ-
ति अत्रकैय्यटः सार्वधातुक एवेति नियमस्तु रुदवि-
देति क्त्वासनोः कित्त्वविधाना न्न भविष्यति अनि-

दृसनी सदादेर्षन्ता श्चेति किल्तुस्यसिद्धत्वात्क्त्वी
ऽनिर् चौपदेशिककिल्तुसद्भावादिति एवमपिइष्टताश-
स्नप्राप्नोति धातोरितिवक्त्ते एवमपिलुभ्यायुभ्यामत्र-
प्राप्नोति एवन्तर्हि विहितविशेषणं धातुग्रहणं धा-
तोर्योविहितः ननुचधातो. रेवायंविहितः नचायंधा-
तोरित्येवं विहितः कापुनर्धातुग्रहणं प्रकृतं क्वतद्-
दृधातोरिति तद्धि षष्ठीनिर्दिष्टं पंचमीनिर्दिष्टेन चे-
हविहितं शक्यते विशेषयितुम् यद्येदानीषष्ठीनिर्दि-
ष्टेनापि विहितं शक्यते विशेषयितुं शक्यमार्द्ध-
धातुकग्रहणमकर्तुमितिप्रकृतिसूत्रे भाष्ये स्थितम् सू-
भ्यामिते तत्समानमेव जुगुप्सतइत्यार्द्धधातुक-
ग्रहणाभावेप्य दोषएव सनोऽनार्द्धधातुकत्वफलंगु-
णाभावएवतेनेड्गुणौनेति फलन्तु भाष्यमते फलि-
तार्थकथनपरं जुगुप्सतइति प्रत्युदाहरणं च ॥ ८ ॥
व्यपदेशिवद्भावोऽप्रातिपदिकेनेति पूर्वादिनिः सपूर्वा-
श्चेति योगविभागेनज्ञापितेयमन्यथैकयोगं पूर्वात्स-
पूर्वादिनिरित्येवकुर्य्यात् नचात्रपृथग्योगेइष्टादिभ्य
इत्यत्रसपूर्वादित्यस्यानुवृत्तिर्नस्यादेवं चानिष्टौतिन
सिध्येदितिवाच्यम् ज्ञापकपरत्वेनद्विधिरिति सूत्रभाष्य
प्रामाण्यादिष्टिनीत्यस्यासाधुत्वात् एकयोगेपि तावत्
उत्तरत्रानुवृत्तौ बाधकाभावाच्च अतएव नान्तादसंख्या-
देरितिसार्थकं मन्यथा ऽत्रापिव्यपदेशिवद्भावेन पंच-
मइत्यादावपि संख्यादित्वात्तद्धैयथ्यं स्पष्टमेवेति प-

रिभाषेन्दुशेखरेस्पष्टम् अत्रैव विचारोमन्दप्रयोजनः ६
पूर्वत्रासिद्धम् सपादसप्ताध्याय्यामुत्तरत्रास्यपाठात्पूर्वत्र-
पदेनतस्याग्रहणात्त्रिपाद्यामसिद्धत्वं प्रतिसूत्रमुत्तर-
त्रासंबंधात्फलित स्त्रिपाद्यां पूर्वं प्रतिपरमसिद्धमि-
त्यर्थः एवमर्थेषुत्वं धुटिसिद्धं वाच्यमित्यादिवार्ति-
कानिप्रमाणानि फलंगोधुङ्मानित्यादिसिद्धिः। अन्य
था पूर्वं पूर्वं शास्त्रप्रवृत्तौ षत्वजश्त्वानुनासिकेषु सत्सु
झष्भावो न स्यादिति शब्देन्दुशेखरोक्तिः साविरुद्धे ति पदा-
न्ते झष्भावस्यन्याय्यत्वात् तत्समाधानंजश्त्वापवाद-
त्वे ऽप्यनुनासिकत्वापवादत्वाभावा षत्वकृते झष्भा-
वो न स्यात् अकृतेकृतेद्रुत्वजश्त्वाप्राप्तावित्यर्थंद्रति-
पण्डितोक्तिः रसंबन्धाजश्त्वे कृते द्रुतिमूलाभावे जश्त्व
प्राप्ताविति व्याख्याया दुरापास्तत्वात् वस्तु तस्तु पौर्वाप-
र्याश्रयणविरोधेन पूर्वं पूर्वं प्रवृत्त्या षत्वं झष्भावजश्त्वा-
नुनासिकानां वृत्तौ नैवानिष्टं किंचित् किंतु षत्वे कृ-
ते झयद्रुतिमतोर्मस्यवत्वापत्तिरेव शेखरोक्ता सुघट इ-
तिचिन्त्यंसुधीभिः अत्रयद्यपिलोकेऽनाहार्यं ज्ञानस्यैवप्र-
वर्तकत्वं दृष्टं तथापि शास्त्रप्रामाण्यादाहार्यारोपो-
पि शास्त्रप्रवृत्तावप्रवृत्तौचनियामकत्वमितिवोद्धव्यमि-
तिशेखरः लोकेऽ नाहार्य्येत्यादिनियामकत्वन्तमु-
क्त मस्यायंभावः यथाभूतले घटोऽस्तीत्यादौ भूतला-
धिकरणकघटवात्त्वं सत्ताऽत्यन्ताभावप्रतिबन्धिका ए-
वमेतत्त्रिपादीस्थं शास्त्रं सिद्धमेव तत्रापि त्रिपादीस्थ-

कर्त्तुं कर्त्तं भवज्ज्ञानंप्रतिबन्धकम् एवं च पूर्वं शास्त्रंप्रति
त्रिपादीस्थमसिद्धमित्यनुपपन्नमेवस्या इतोदर्शनलुपि
लोपेऽभावारोपस्य रूपत्वेन मनोरथरूपत्वादावदोषो ऽ
भावभावस्य प्रतियोगिस्वरूपत्वात् न चोत्वदृष्ट्यारो
रित्यस्यासिद्धत्वमितिवाच्यम् दीर्घविधिसामर्थ्यादा-
श्रयासिद्धत्वात् अत्रसमाधानं कर्मशोरोमन्येत्यादिनि-
र्देशेनयत्रशास्त्रान्तरदृष्ट्याऽसिद्धत्वं नास्ति तत्रैवाश्र-
यासिद्धत्व भवतु इत्यविचेत्येतत्सव त्यापिरोरित्यस्या
सिद्धमिति, नाश्रयासिद्धत्व मन्यद्धि भावयन्तु भणिडताः
वस्तुतस्तु यौगपद्येन शास्त्रद्वयप्रसङ्गे शास्त्रासिद्धत्वम
ह्वे रोरीत्यस्याप्रवृत्त्याढ्लोपाभावेन रलोपशास्त्रस्यैवा
प्रसङ्गः कार्य्यासिद्धत्वे रलोपे इत्यविचेत्यतः परत्वाल्लोप
द्रुतिदीर्घेऽपि इत्यविचेत्यन्तरङ्गप्रतिपदद्वयसापेक्षत्वाद्बहिर-
ङ्गदीर्घस्य पूर्वं त्रासिद्धमिति रलोपस्यासिद्धत्वादुत्वमे-
व किञ्च कर्मशोरोमन्येत्यादिनिर्देशेनासिद्धवचनं किम
र्थमादेशलक्षणप्रतिषेधार्थं मुत्सर्गलक्षणभावार्थं चेति भा
ष्येणतत्वस्य कैय्यटविवरणाभ्यां शास्त्रासिद्धत्वस्यैवा-
श्रयणा इदोष इतिदिक् ॥ १०॥ स्त्रीप्रत्यये चानुपसर्ज
नइति अनुपसर्जनेस्त्रीप्रत्ययेतदादिनियमो न उपसर्ज-
नेतुभवत्येव कारीषगन्धेरपत्यं स्त्रीत्यर्थे तस्यापत्यमि
त्यणि अणिञोरनार्षयोरितिष्यङित्यणःष्यङादेशे चापि
स्वरूपम् कारीषगन्ध्यायाःपतिःकारीषगन्धीपतिःपरम-
कारीषगन्धीपतिःष्यङःसम्प्रसारणंपुत्रपत्योस्तत्पुरुषइ-

तिसम्प्रसारणंयथाऽवभवतितथापरमकारीषगन्ध्यायाः
पतिःपरमकारीषगन्धीपतिरत्रापिभवतिस्त्रीप्रत्ययस्य
पतिंप्रत्युपसर्ज्जनत्वेऽपिपरमशब्दार्थंप्रत्यनुपसर्जनत्वा
त्कारीषगन्ध्याशब्दस्यापिष्यङन्तत्वात्कारीषगन्ध्याम
तिक्रान्ताऽतिकारीषगन्ध्येति विग्रहेऽतिक्रांतार्थम्प्रति
स्त्रीप्रत्ययस्योपसर्जनत्वात्तदादिनियमसत्त्वादतिका-
रीषगन्ध्याशब्दस्यापि ष्यङन्तत्वा न्न संप्रसारणम् प-
चमण्डिताः इयं परिभाषा न कर्त्तव्या ष्यङोऽनुपसर्जन-
स्यसम्प्रसारणंमि त्यादिसूत्रकरणात् अवसमाधानं
परमाकारीषगन्ध्यायस्य स परमकारीषबंधुः विना-
पिप्रत्ययंपूर्वोत्तरपदलोपोवक्तव्य इति परमपदस्यलोपे
कारीषगन्ध्यस्यपुत्र इतिविग्रहे कारीषगन्धीपुत्र इतीष्य-
तेस नस्यात् अतःपरिभाषयैववारणम् यद्यपि संज्ञास-
त्तायांविषयेपूर्वोत्तरपदलोपेसत्याभामाभामाभीमोभी-
मसेनइत्यादितदुदाहरणंतथापिस्तोः श्चुनेत्यत्रयोगः
संयोगः संयदस्य सत्याभामेत्यादावपि विनापीष्यतो-
लोपादितिशेखरविरोधादसंज्ञायामपि लोप इति व-
दंति एतच्च परिभाषावर्णनं तस्याः प्रयोजनान्तरं
नास्तीत्यभिमानेनैव वस्तुत स्त्वतिखट्वायेत्यत्राड्वारणं
प्रत्युदाहरणं परमखट्वायैइत्यादौतद्भावनं परमकारी-
षगन्ध्याशब्दः प्रत्ययग्रहणपरिभाषयाष्यङन्तो न भव-
ति परिभाषाग्रहणमनुपसर्जनत्वात्तदादिनियमेना-
प्यष्यङन्तमपि दृश्येति ध्वनितं भाष्ये पूर्वपदलोपोप्यत्र

चिन्त्यम् वहुपनोऽस्पधनद्रुतद्रादा वपितद्रापत्तेः यत्तु योगपदेसंधद्लोपोदाहरणं तत्तत्व युजेरेवसंयोगार्थ करत्वे नादोयात् अतएवाव्यवहितेश्चतुत्सिद्धये स्तोश्नौ-श्चुरित्युक्तम् भाष्यसूत्रकारमतेऽपि स्पष्टप्रतिपत्तये संयोगपदाध्याहारएवेत्युचितइतिदिक् ॥ १० ॥ इनादे-र्गुरुमतोऽन्च्छः इनादेः किम् वधी गुरुमतः किम् उ-वोष अन्च्छः किम् आनच्छं नच ऋच्छत्यृतामिति लिटि गुणविधानसामर्थ्यात् दास भविष्यति किमनेन पर्युदासेनेति वाच्यम् गुणविधानसामर्थ्यं नाभाव्यवहितेऽपि तत्प्रवृत्ते रितिशेखरेसमाहितम् तत्राथकात्सूत्रेऽन्च्छ इतिपदाभावे आनर्च्छ त्यत्रामप्राप्तः गुणोऽपिप्राप्तस्तस्य प्रतिपदोक्तत्वादपवादत्वाच्च गुणे क्वते इजादित्वाभावादामः प्राप्तिरेवनेति व्यर्थमन्च्छपद म वसमाधानम् विभावयन्तुसुधियइतिपरिखता. शेखर पंक्तिस्तु इत्थम् नच ऋच्छलिटिगुणविधानसामर्थ्यादेव तत्सार्थंस्यादितिसूत्रतात्पर्य्यादिति अनयापङ्क्त्या भाष्यसिद्धान्तोप्यागतइतिसूचित तथाहि इयेपेत्यादावाम्व्याप्तये उपदेशेगुरुमतोऽन्च्छइति उक्त्वा एवं तर्हि उच्छेराम्वक्तव्य. अन्च्छइतिज्ञापकादनौपदेशिकस्यापि गुरुमत्त्वस्याश्रयमाणे उच्छाञ्चकारेत्यादावसिद्धौ इयेपेत्यादावतिप्रसंगमाशङ्क्योभयं न वक्तव्यमुपदेशग्रहण न करिष्यते कस्मान्नभवति इयेपेत्यादावु-त्त्मवा किमुक्तं सन्निपातविरोधादितान्च्छग्रहणंच

र्थमेवेति भाष्ये स्थिते पूर्वशेखरेऽनृच्छ इति पर्युदा-
समाश्रित्योचोगुरोरनृच्छ इत्येवसिद्धे रादिग्रहणं-
मतुब्ग्रहणं च स्पष्टार्थमित्युक्तम् इत्यादिगुरुमते-
नैवानृच्छ इति पर्युदासः सार्थकोनान्यथेति तन्ना-
वस्तदपि चिन्त्यमेव संयोगेगुरुमत्त्ववतामेव यच्छ-
ब्दापत्त्या ईङ्गतौ इत्यादीनामसंग्रहापत्तेः इचो-
गुरोरिति सामर्थ्यान्नायं दोषोन्यथा नृच्छ इत्येव
ब्रूयादिति चेतावताप्यचोयदिगुरुमत्त्वस्याश्रयणे
इडादेरसंग्रहः ऊं च्छादेरेव संग्रह इति दोषसत्त्वा-
त् वस्तुतस्तु गुर्विंजादेरित्युक्तेतरत्कर्तुमशक्य-
मथवा गुर्वादेरित्येवास्तु इयायासश्चेत्यनात्यच्छ-
ब्दादकारगुर्वादेश्चेत्यादेरेवेतिनियमात्सिद्धेः न-
वा सैरौपदेशिकाकारगुर्वादित्वेनैतद्विषयकनिय-
मेयत्वादिप्रभृतिभ्यामस्यादितिवाच्यम् लाघवेन-
सामान्यनियमाश्रयणादितिदिक् ॥११॥ अतो-
दीर्घो यञीति सार्वधातुके किम् केशवः अङ्गना
केशाहोन्यतरस्यामितिवः अस्केचित् सार्वधातु-
कग्रहणं मास्तु सुपिचेति सूत्रनियमादेवादोषात्
सार्वधातुकाभिन्ने यञादौ दीर्घश्चेत्तर्हि सुप्येवे-
ति केशवशब्दादावपत्तेः समाधानन्तु राजभ्या-
मित्यादावपि दीर्घापत्तिरिति अतोदीर्घस्य सु-
ब्विधित्वाभावेन नलोपः सुप्स्वरेति नलोपासिद्ध्य-
भावात्सुप्तुतद्व्याप्यधर्माश्रयविधौ च सुब्विधि-

स्यादिति समाधानान्तरं तु तत्त्वप्रकाशिकायां
द्रष्टव्यम् ॥ ११ ॥ ज्योतिरायुषः स्तोमः समासेऽनु-
से. संग इत्यतस्समास इत्यनुवर्त्तते चाभ्यामुत्तर-
स्योत्तरपदावयवस्य च इत्यर्थः अत्र मूले समासे-
किम् ज्योतिषः स्तोम इत्युक्तम् तच्च इण्कोरि-
त्यधिकारात् किन्तु ज्योतिस्तोमोऽस्तिब्राह्मणाना-
मिति प्रत्युदाहर्तुमुचितमिति पण्डिताः केचित्तु
समासइत्यस्यानिवृत्तावप्यस्य पदविधित्वात्समर्थ-
परिभाषया समास एवास्य प्रवृत्तिरिति समास-
ग्रहणं चिन्त्यप्रयोजनमित्याहुस्तन्न पदाधिकार-
स्यापदान्तस्य मूर्धन्य इत्यत प्रागेव निवृत्ते भा-
ष्ये उक्तत्वात् वस्तुतस्तु मूलाशय इत्थयोऽन्यः
॥ १२ ॥ नुम्विसर्जनीयशर्व्यवायेऽपीति षत्वस्य सा-
त्पदाद्योरिति निषेधस्यापवादोयं तेन नुम्विसर्ज-
नीयेति संबध्यते इति वाक्येऽपि प्रवृत्तिः नच प्र-
त्येकमितिव्याख्यानान्निंस्इत्यत्रैवास्याप्रवृत्तिरि-
ति वाच्यम् एवतर्हि समस्ताभ्येव भीरुष्ठानाग्नि-
ष्टुदग्निष्टोमज्योतिष्टोमादीत्यत्र समासे किम् इ-
त्यनेन तदधिकारीयभीरो स्थानमित्यादिष्वनू-
न्नीकिमर्थमिति प्रश्नाशय असमासे प्रवृत्तिविरहा-
त्पुरापायांसिति तदुत्तरमित्यन्ये ॥ १३ ॥ रामा-
द्रामादित्यत्र मूले अपत्यं वावसान इत्युक्तम् पू-
र्वं पत्वासिद्धा असत्वमिति मनोरमा चापवादत्वा-

जश्त्वं बाधित्वा चर्त्वं ततोजश्त्वमिति शेखरः ज-
श्त्वाप्राप्तिविषये चर्त्वस्याचारितार्थ्यादपवादत्वसं-
गतेरिति शेखराशयः अस्योपरिदूषणान्तरं षष्श-
ब्दादौ पूर्वं षस्य ष एव चर्त्वं ततोजश्त्वं पक्षे ष
एव श्रूयेत् जश्त्वाद्यः षडिति निर्देशेन ष-
स्य टकार एव नतु षकार इति परिहारेऽपि पू-
र्वापरविरोधः शेखरस्यास्त्येव उपानदित्यत्र चत्व
जश्त्वचर्त्वानिति तदुक्तेः किं च चतुर्णामित्यत्र-
चर्त्वं द्वित्वमिति प्रतीकमुपादाय ननु द्वित्वं चत्व-
मित्येव युक्तम् पूर्वत्रासिद्धमद्वित्वे इति वचना-
दिदं यणोद्वित्वेऽपि प्रवर्त्तते वाक् वागितिभाष्यो
दाहरणात् अन्यथा द्वित्वदृष्ट्या चर्त्वस्यासिद्धत्वा-
दृगस्यैव द्वित्वं तस्य चर्त्वं पूर्वत्र गग्रहणापत्तेरि-
त्युक्तम् अस्मादपि पूर्वं जश्त्वं पश्चाद्द्वित्वमित्याया-
तीति पण्डिताः पदान्तविषये पूर्वं जश्त्वमिति
व्याख्यमेव वावसाने इत्यस्यापदान्तभक्तां चर्त्ववि-
धानेन चारितार्थ्यात् अत्र पदाधिकाराभावात्
अनुकरणंचानितिपरमिति ज्ञापकादनितिपर-
स्याप्यनुकरणस्य सत्त्वादवसाने त्यदाद्यनुकरणे त्य-
त् तत् इत्यादौ पक्षे चर्त्वस्यापीष्टत्वात् नत्विद-
मयुक्तं नह्यनुकरणत्वभङ्गभिया शास्त्रस्य वाधकम-
त्कारतामुपैति पटत् इति इत्यादिषु अव्यक्तानु-
करणस्यात इतौ इति शास्त्राणामप्रवृत्त्यापत्तेः ते-

यां वैयर्थ्यापत्तेश्चेत्यलं विस्तरेण ॥ १४ ॥ प्राचां
ष्फस्तद्धितः गार्ग्यशब्दात्ष्फः चायनादेशे यस्येति
चेति तद्धितनिमित्तकयकारलोपः तद्धितान्तत्वे
प्रयोजनं प्रातिपदिकसंज्ञा षष्फान्तस्य तेन षि-
द्गौरेति सिद्धश्च ङीषिति तत्र सत्रपोर्ग्येण षि-
त्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीषा च सिद्धि-
मास्त्रित्य तद्धितग्रहणं प्रत्याख्यातम् गौकक्ष्या-
द्योगर्गादियञन्तस्तस्मात्क्रौड्यादिभ्यश्चेति क्रौ-
ड्यादिगौकक्ष्यशब्दात्ष्यङ् यतोयङश्चेति चाप्
गौकक्ष्या ततः ष्फप्रत्यये विवक्षिते तद्धितसंज्ञा-
यां भस्याढे तद्धिते इति पुंवद्भावे चापोनिवृत्तिः
ष्फप्रत्यये षित्वान्ङीष् गौकक्ष्यायणीति सिध्य-
ति पुंवद्भावश्च तद्धितत्वएव ष्फस्य सगच्छते पुं-
वद्भावाभावे यङन्तत्वविरहात्ष्फोन स्यादिति च-
स्य चित्समाधानन्तु न युज्यते तथाहि गौकक्ष्य-
शब्दपाठस्य क्रौड्यादिषु भाष्ये प्रत्याख्यातत्वात्
गौकक्ष्येति तु याबञश्चेति चापि सिध्यति मा-
स्तु क्रौड्यादित्वात्ष्यङ् नच गौकक्ष्यायणीति न
सिध्येच्चापः ष्फप्रत्ययस्यापवादत्वादिति वाच्यम्
प्राचांष्फ इत्यत्र सर्वत्रेति सूत्रात्सर्वत्रेत्यपकृष्य
प्राचां सर्वत्र ष्फविधानात् गौकक्ष्येति तुदीर्घा-
न्ते सेत्स्यति एवञ्च गौकक्ष्यापुत्र इत्यादौ ष्यङ-
न्तत्वाभावेन ष्यङः सम्प्रसारणमित्यस्याप्राप्त्या

गौकक्ष्यायाः सम्प्रसारणप्रतिषेधोवक्तव्य इति वा-
र्त्तिकमनारम्भणीयमित्यपरमनुकूलम् किंच ष्फ-
प्रत्यये विवक्षिते भस्याढेतद्धित इत्यस्य प्रवृत्तिर-
नुचितैवायनादेशोत्तरमेव भसंज्ञायाः प्रवृत्तेः किं-
चाण्षंते यजन्तत्वविरहेण ष्फस्याप्रवृत्तेः किंच त-
द्धितग्रहणमन्यतोऽपि विधानार्थं तेनासुरेरुपसं-
ख्यानं नापूर्वमिति कैयटोप्येकदेशी तथाहि आ-
सुरेरुपसंख्यानमित्यस्यार्थे भाष्ये ष्फक्षेति वक्तव्य-
मासुरीयः इत्युक्त तत्र सिद्धान्तः कैयटः आसुरि-
णाप्रोक्त इति विशेषेऽर्थे इति अणि प्राप्ते छएव
क्रियते लाघवादन्यथा हि आसुरीयग्रहणं कर्त्तव्यं
स्यादिति एतेनोपसंख्यानस्यावश्यकत्वे प्राप्तामि-
ति सूत्रस्थभाष्यं तद्धितग्रहणप्रत्याख्यानमेवाद्रि-
येत इति तत्त्वप्रकाशिकायां द्रष्टव्यम् ॥ १५ ॥
टिड्ढेत्यत्र वार्त्तिकम् नञ् स्नञ् ईकक् ख्युं-
स्तरुणतलुनानामुपसंख्यानमिति तेन ङीपि च-
न्तानुदात्ताविमौ गौरादिङीषि तु अन्तोदात्तावि-
ति ग्रन्थकाराः तत्र पण्डिताः वार्त्तिके गौरादौ
चानयोः पाठो मास्तु बह्वादिष्वेवानयोरस्तु पा-
ठस्तत्र पाठान्ङीष्सिद्धः पक्षे वयस्यचरम इति
ङीबिति स्वरद्वयसिद्धिरिति समाधानं विभावय-
न्तु सुधिय इति अथेदं तत्त्वं तरुणतलुनशब्दौ
योरस्य इति उरन् प्रत्ययान्तौ यौगिकौ तरति...

प्रथमं वयस्तरति दुःखमिति वा यदाह दुःखतरं णकं चौणादि. तदापि ङीप्सिद्धये गौरादिपाठ आवश्यको नेह वयस्यचरम इति प्राप्तेति एतच्च वयस्यचरमइति ब्रुवता तरुणतलुनयोरुपसंख्यान कुर्वता वार्तिककारेण सूचितम् सूत्रकारमतेन प्रथमवयोवाचिन एव यत्तथात्तरुणतलुनयोरप्रयोगमेव सर्वथेति गौरादिपाठस्तयोरिति बोध्यम् मध्याह्ने तरुणोरविरित्यादौ प्रचण्डो रविरित्याद्यर्थसावश्यक तरुणशब्द. प्रौढपर्यायोपि भय तदर्थको यदा तरुणशब्दः प्रयुज्यतेऽथवा तरुणतात्पर्येण वृद्धेपि प्रयुज्यतेऽथवा प्रौढ्यार्थको वा गृह्यते तत्तात्पर्येणोपसङ्ख्यानमिति ॥१६॥ घेर्ङिति भवान्नस्य सुपीति चानुवर्तते अत्र पण्डिताः घेर्ङीत्येवास्तु यस्मिन्विधिरिति परिभाषया तदादिविधौ ङादौ सुपीत्यर्थेन सिद्धेरित्याहुस्तं व्यर्थं प्रायोगिकङादेरसम्भवादानुपदेशिकङादित्व गृह्यते । प्रवाहुशब्दात्तृतीयैकवचनस्थाने आङयाजयेत्याङादेशस्तु ङादेश एवास्तु प्रवाहवेत्यादिसिद्धये मत्यामित्यादौ तु ङेरामादेशे तस्य ङादित्वाभावादाघुया इति न प्रवर्तेत ङितिकरणे तु अनुबन्धकार्यत्वादनल्विधावपि स्थानिवत्त्वात्प्राप्यते यद्यपि तथाऽपि ङेरामित्यत्र ङेर्ङामिति उक्ते न कश्चिद्दोष इति प्रश्नः अत्रोत्तरङ्गानामादेशे कृते त-

शक्तित्संज्ञाऽऽग्नूया इत्याट्च प्राप्तौ तथाडागम-
स्याहृत्वाद्वार्थपरिभाषयान्तरङ्गाया धपीत्संज्ञा-
या बाधेऽडकारश्रवणापत्तिराडागमस्य नित्य-
त्वमपि इति केचित्समाधत्ते ॥ वस्तुतस्तु इत्य-
हणं स्पष्टार्थं चाग्नुनद्या इत्यादौ सेनान्यामित्या-
दौ ङामादेशपरित्यर्थं इति नदावन्ते परत्वा-
न्ङामादेशे सकृद्गतिन्यायादाडागमाप्रवृत्तेर्य-
णाकूपसिद्धेः न चाडागमाभावे नुटस्यादिति वा-
च्यम् निरनुबन्धपरिभाषया आम् ग्रहणे नङा-
मोऽग्रहणादत एव सानुबन्धो ङामादेशपरित्या-
र्थः नचैवं रीत्या नुटो ऽभावेऽपि चाट् इव याट्
स्याटोरप्यप्रवृत्तिस्स्यादिति वाच्यम् लक्ष्यव्यवस्था-
पकावेतौ न्यायौ पुनः प्रसङ्गेतिसकृद्गताविति-
वलक्ष्यानुरोधाद्याट्स्याटोर्विषये पुनः प्रसङ्गा-
द्याट्स्याटावित्यदोषात् कथमन्यथाऽटिकृते ऽपि
यदागमन्यायात्परादिवद्भावाद्वाऽऽमत्वेन प्राप्तस्य
नुटोवारणं भाष्योक्तं संगच्छेत् चागमादेशे पर-
त्वात्कृते पुनः प्रसंगाद्याट् तस्मिन्कृते सकृद्गति-
न्यायान्नुटोऽभाव इति भाष्यमते यथासिद्धिरि-
ष्टस्य तथाऽत्रपक्षे ङामि कृते सकृद्गत्याऽटोभा-
वः पुनः प्रसंगाश्रयेण याट्स्याटोः प्रवृत्तिरेव न
भेदो रूपसिद्धिरप्यमैव अथवा भवत्वाट् ङ्योरसं-
ज्ञा तु अशक्तित्यचोपदेशे ऽजित्यत

मुहस्त्यासेत्स्यति प्रत्ययस्योपदेशे आदिभूतं यत्र-
कु तस्येत्संज्ञेति व्याख्यानात् एतच्च सुट्इति सूत्रे
भाष्ये ध्वनितं तथाहि चुञ्चुप्चणपोश्चकारप्रति-
षेध इतिवार्त्तिकप्रत्याख्यानाय भाष्ये उक्तम् च-
कारादि चुञ्चुप्चणपौ किं चकारो न श्रूयते सु-
प्रनिर्दिष्टो चकार इति अत्र चकारे सुतेऽपि प्र-
त्ययादित्व इतीत्संज्ञाप्राप्त्योपदेशे आदित्वका-
रीनास्तीति तात्पर्य्यं फलम् कल्प्यम् सामर्थ्यक-
ल्पनाया अनौचित्यादेवञ्च लशक्वतद्धितेसूत्रेऽपि
साहचर्य्येणोपदेशपदानुवृत्त्याऽदोष इति तत्त्वप्र-
काशिकायां द्रष्टव्यम् ॥ १७ ॥ अनेकाल्शित्सर्व-
स्य अत्र शेखरः नानेकाल्शिदिति तु नोक्तम् त-
न्नयुक्तम् अनन्तरत्वाद्दादेः परस्येत्यस्यैव निषेधे
हि ङिदनेकाल् अलोऽन्त्यस्येत्येवास्य सिद्धे ङि-
च्चेति व्यर्थमवेत्यथानन्तरन्यायो न प्रवर्त्तते अत्र
समाधानं कुर्वन्तु सुधिय इति अत्र पण्डिताः य-
द्यप्येतत्कौस्तुभेऽप्युक्तम् अन्त्यस्यादेरिति चानुव-
र्त्यानेकाल्शिदादावलयोर्नेति ङिदनेकालोऽन्त्या-
र्थं ङित्त्वकरणमव्ययमिति तथापि युक्त शेखराश-
यः ङित्त्वाश्रयणात्पदद्वयार्थं कं भाग्यदलाघवाद्यथा-
श्रयासमुचितमिति ॥ १८ ॥ अदर्शनं लोपः अत्र
षष्ठीस्थान इत्यनुवर्त्तते तेन षष्ठ्यन्तस्य स्थाने य-
ददर्शनं तल्लोपसंज्ञ इत्यर्थः तेन अपु इत्यत्र क्वि-

पोऽप्रसंगात्तददर्शनस्य लोपसंज्ञाऽभावाद्ध्रस्वस्य-
पितीति तुक् न भवतीत्याह प्रसक्तस्येति तदुक्तं
शेखरे तस्मात् चपु इत्यत्र क्विपोऽदर्शनस्य सत्त्वे-
न न प्रत्ययलक्षणेन तुगापत्तिर्दोष इति न चा-
यं शेखरग्रन्थः स्थानिवत्सूत्रस्थभाष्यविरुद्धस्तथाहि
भाष्ये शब्दस्य नित्यत्वाद्बुद्धेरेव स्थानितादेशता चे-
ति पक्षे सेनानीरित्यादौ कर्मण्यण् बुद्धिः किंन्तु-
द्धिरिति स्थानिवत्त्वेन वृद्धिः प्राप्नोतीत्याशंक्य षष्ठी-
निर्दिष्टस्य स्थाने यथादेशस्तस्यैव स्थानिवदिति
समाहितं प्रकृते क्विपः प्रातिपदिके प्रत्ययलक्ष-
णेन तुगापत्तिः प्रत्ययलक्षणसूत्रेणापि स्थानिव-
द्भाव एवानूद्यत इति चेन्न चपुइत्यत्र दोषाभावे-
नैवाह भाष्ये ग्रामणीरित्यत्राप्रसंगे प्राप्ते क्वि-
प्प्रसंगे बुद्धेरेव स्थानिवद्भावादृद्धिमाशंक्य योऽ-
त्राप्रसंगः क्विपाऽसौ बाध्यते इत्युक्तम् स्वरसूत्रेपि-
ति क्विपो विधानादणोऽत्राप्रसङ्ग इति कैयटः त-
स्मान्नाप्यातषष्ठीनिर्दिष्टस्य स्थानिवद्भावो बाधित ए-
व चपुइत्यत्र तु यथावत् क्विपः प्रसंगो नास्तीति
तत्र प्रत्ययलक्षणप्रदर्शनमेकदेशिन इति तत्त्वम्
ग्रामे तिष्ठतीत्यत्र स्यबंतार्थनिरूपितार्थाधिकरण-
त्वाभाववत्क्विबन्तार्थनिरूपितधात्वर्थक्रियायाः प्र-
कृत्यर्थत्वाभावाच्च प्रकृते षष्ठीस्थानेइत्यस्य भाष्ये
ऽनुवर्त्तितत्वाच्च वस्तुतस्तु स्थानिवत्सूत्रोक्तषष्ठी-

निर्दिष्टस्यादेशः स्थानिवदिति भाष्येणैवगतार्थता प्रकृतसूत्रे षष्ठीस्थानेयत्वस्यानुवृत्तिप्रदर्शनं भाष्ये स्पष्टार्थमेवेति यत्तु अदर्शनमिदित्येवास्तु अदर्शनम्येरसंज्ञा तस्यलोपइति न कर्त्तव्यमुपदेशेऽजित्यादिसूत्रैरदर्शनस्यैव विधानादिति तन्न कृत्रिमाकृत्रिमयोःकृत्रिमस्यैवग्रहणे भृञामित् तिष्ठतेरित्प्रत्ययः स्यादित्यादिष्वित्पदेनादर्शनप्रतीत्यापत्त्या तच्चासिद्धेः तपरसूत्रस्य कृदित्यादिविषयेस्याचाकृत्रीडन्यन्यायेनेत्यदर्शनबोधिका सञ्ज्ञा स्यान्नतु तत्कालबोधिकेति संज्ञयोर्विरोधाच्च समावेशासम्भवः इदित्येकमात्राकालिकेकाररूपस्य भावस्य दर्शनरूपत्वाभावात् तपरसूत्रेणास्यादसंज्ञायाः बाधेऽस्यानिर्विषयतापत्त्योपदेशेऽजित्यादीनांस्वरूपमात्रबोधकतापत्तिः स्यात् इदितोनुमित्यस्य स्वयमर्थः स्यात् इदिकारोऽदर्शनं यस्य सामर्थ्यात् यस्येकारोनास्ति चनप्रभृतेस्तस्यैव नुम्स्यात् चितिप्रभृतेरिकारवतोनस्यात् यथाऽपि कथं चिदन्तेदितइतिव्याख्यानात्स्याभृञामिदित्यादिष्वतपरनिर्देशेन निर्वाहे तु अदर्शनमिदिति सुवचमेव ॥१८॥ द्विस्त्रियतुरिति कृत्वोर्थे अत्र शेखरः इसुसोरिति उत्तरसूत्ररीत्या सुचइतिसूत्रयितुमुचितम् सुजन्तस्य पदस्येत्यर्थादिति अत्र दूषणं चतुष्करोतीत्यनेदुदुपधस्येति

नित्यषत्वापत्तिः सुच इत्यस्यासिद्धत्वात् अप्रवृत्तेः
सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्नासिद्धत्वमित्यदो-
ष इति अत्र समाधानमिदुदुपधस्येत्यत्रापि स-
म्बन्धापत्तेः भाष्ये तु इदुदुपधस्येत्यनुवर्त्य क्त्वो-
र्थइत्येव सुवचमिति स्थितम् तदुपपत्तिस्तु सु-
चइत्येव सिद्धे गुरुभूतनिर्देशाद्वासिद्धत्वमिति
चतुष्करोतीत्यत्राष्टौ विकल्पः संपन्न इति तत्त्वप्रका-
शिकायां द्रष्टव्यम्॥२०॥इको गुणवृद्धी सूत्रप्रयोजन-
म्वासिकमिग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थ-
मिति अत्र कैयटः अकारस्याकाररूपे विशेषो मा-
स्तीत्युक्तमिति अत्र केचिद्विशेषं दर्शयति अकार-
स्याकारे गुणे कृते पेचिथेत्यत्र नशसददवादिगु-
णानामिति निषेधादेत्वाभ्यासलोपेन स्यात् व-
स्तुतस्तु विशेषो नास्त्येव थलिचसेटीत्यारम्भसाम-
र्थ्यान्न विशेष इति पेचिथेत्यत्रैव ववरियससरि-
थेत्यादावपि निषेधानापत्तिः नशसददेतिसूत्रे गु-
णग्रहणस्य तु न वैयर्थ्यम् पपरतुः पपरुरित्यादा-
वृच्छत्यृतामिति गुणे कृते एत्वाभ्यासलोपनिवृत्त्या
चारितार्थ्यात् अत्र केचिदित्थं समाधानं कुर्व-
न्ति केवलदीर्घस्थानिकगुणविषये नशसेत्यस्यसा-
वकाशत्वे इति गुणग्रहणम् अपहायतत्स्थाने इग्-
ग्रहणमेव कुर्यात् सामान्येन गुणग्रह-
णसामर्थ्याद्विजातीयस्थानिकविजातीयगुणस्यैव

ग्रहणादत्र विजातीयस्थानिकविजातीयगुणस्था-
भावादिति कैयटग्रन्थेन काप्यनुपपत्तिः अथवा अ-
लिचसिटीति सूत्रस्थभाष्यरीत्या नञ्सदृदेत्यत्र गु-
णग्रहणं गुणावयवपरं गुणावयवो योऽकारस्तस्य
निषेधस्तत्र तुनविधित्यचैव सम्भवतीत्यदोष इति
पण्डिताः वस्तुतस्तु अकारान्तधातोरेवाकारस्या-
कारे गुणे कृते न विशेषतीतिकैयटाशयः अका-
रोपधहलन्तं तु अर्णोऽत्यस्येति हलएव गुणः ना
चः इक्परिभाषाया अभावात् अथ युक्तिमन्तः
लघ्वीउपधा पुगन्तस्य लघूपधा चानयोः समाहारः
पुगन्तलघूपधमिति समासमाश्रित्य व्यधिकरणा-
न्वयाद्दंगावयवलघूपधाया गुण इति व्याख्यान-
मालम्ब्य पिपिथेत्यादौ विशेषोक्तिसम्भवन्तोऽपि न
युक्तः वार्त्तिकप्रयोजनम् प्रत्याख्यान एवास्य प्र-
घारस्य भाष्ये उक्तत्वात् किंच अयं प्रघारीन
वार्त्तिकसम्मतोऽन्यथा कारसंध्यसरेत्यादेव ब्रूया-
त् सम्ध्यचरेति न ब्रूयात् पुगन्तस्याङ्गस्य गुणो ल-
घूपधस्याङ्गस्य गुण इति सामानाधिकरण्येनान्व-
ये ऽलोऽन्त्यपरिभाषोपस्थितिपक्ष एव वार्त्तिके चा
दित्युक्तिसङ्गच्छते पुगन्तलघूपधस्येति सूत्रं तु उ-
पधावतोऽङ्गस्य चेत्तर्हि लघूपधस्येति नियमार्थं-
स्यात्तेनैहितोहितीत्यादौ गुणः गोपयतीत्यादौ नि
यमबाधेन गुणएवेति तदपि नव्यपदेशिवद्भावेन

त्त्वात् ॥ २१ ॥ क्ङितिप्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यं किम्प्रयोजनम् उपधारोरवीत्यर्थं नवक्तव्यं ज्ञापकात् प्रतिषेधोभविष्यति यदयमिको-झलहलन्ताच्चेति सनः कित्त्वं शास्ति तज्ज्ञापयत्याचार्य्योभवत्युपधानुपधा वा तस्यापि निषेध इति ग्रन्थः अत्र केचित् हलन्ताच्चेतिसूत्रस्य न वैयर्थ्यं हलसनिसन्यङोरिति हित्वे ऽचलोपोऽभ्यासस्येत्यभ्यासलोपे दम्भइच्चेति हलन्ताच्चेति सनः कित्त्वे धिप्सतीत्यत्रानिदितामिति नलोपाद्यत्वात् कित्त्वस्य दम्भइच्चेत्येव सिद्धेर्हलन्ताच्चेति सामान्यस्यारम्भात् समाधानन्तु वक्ष्यति दम्भोर्गत्यमकिति सनीको झलदंभेरिति लघुनोपायेन सिद्धे हलन्ताच्चेति ज्ञापकमेवेति पण्डिताः वस्तुतस्तु दम्भेरित्युक्ते सनिमीमाघुरभलभशकपतपदामच इ-त्सितिमीमादीनांनित्यादेशे भिप्सति दित्सतीत्यादौ गुणाभावार्थं हलन्ताच्चेति सनः कित्त्वार्थमावश्यकं तथा सनीवन्तर्द्धतीडागमाभावे दिधूर्षतीत्यादिसूत्रारम्भे एव सिध्यति ज्ञापकपरभाष्यस्य त्वयमाशयः प्रतिलक्ष्यं लक्षणभेदः यद्यपि नलोपामागमाभावयोश्चरितार्थीविधिस्तथा प्युपधागुणनिषेधार्थोहलन्ताच्चेत्यचरितार्थं इति ज्ञापकत्वं तस्येति ॥ २१ ॥ नलोपः प्रातिपदिकान्तस्य अन्तग्रहणमत्र ज्ञापकम् पदस्येत्यधिकारः क्वचि-

स्थानषष्ठी क्वचिदवयवषष्ठी तेन मादुपधायाश्च-
मतोर्वो इत्यत्रावयवषष्ठीत्वे यदावयवमतोर्मस्य
च इत्यर्थे हृचवन्तावित्यादौ वत्वसिद्धिरन्यथा ह-
घवान्नित्यत्रैव स्यान्नतु हृचवन्तावित्यत्रेति शेख-
रे स्थितम् वस्तुतस्तु व्याख्यानादेतल्लभ्यमन्तग्रहणं
स्पष्टार्थमिति पदस्येत्यत्र भाष्ये ध्वनितं तत्र चि
न लोपे प्रत्याख्यायते स्थानेषष्ठी चान्तग्रहणाद्वा
नलोपे इत्युताम् आयवादव्याख्यानेनैव षष्ठ्यर्थनि-
र्णये षष्ठीस्थाने इति योगोऽन्तग्रहणं च न का-
र्यमिति भाष्याशयः ॥ २३ ॥ तस्माच्छसोनः पुं-
सि ननु शसोनुम्पुंसि इत्येवसूत्रमस्तु अचः स-
वर्णे इत्यतोऽक इत्यनुवर्त्याकः परस्य शसोनुम्स्या-
दित्यर्थः परत्वान्नुमि पश्चात्प्रथमयोरिति पूर्वसव-
र्णदीर्घे संयोगान्तलोपे सिद्धं रामानित्यादिविष
इत्यादावकः परोन शस् एतान् गाः पश्येत्यत्रापि
औतोऽम्शसोरित्येकादेशे आकारे कृते शस्पर-
त्वाभाव इतिदोषाभाव इतिचेन्न विश्वप इ इ-
त्यादावातोधातोरित्यालोपे पूर्वस्मादपिविधाव-
चः परस्मिन्निति स्थानिवद्भावे ऽकःपरः शस् इति-
नुमापत्तेः पञ्चमीसमासप्रत्याख्यानपक्षे तु न दो-
षः अष्टावित्यत्रौशादेशे आत्वे कृते नुम्स्यादिति
वाच्यम् नकारस्यात्वं परनिमित्त बहिरङ्गमन्तर-
ङ्गे नुमि कर्तव्ये तस्यासिद्धत्वादकः परत्वाभावात्

अथ वा णौशादेशः क्रियते प्रियतिस्र इत्यादौ त्वचिरेण बाधः अत्र समाधानं कुर्वन्तु सुधिय इति पण्डिताः अथेदं समाधानं रामानित्यत्र पूर्वसवर्णे इति दीर्घे नित्यत्वात्कृते पश्चात्सकारस्य नुमापत्तिः मित्त्वसामर्थ्यात्पूर्वं नुम् चेत्कार्य्यकालपक्षे ऽन्तरङ्गे ऽट्कुप्वाङ्निति णत्वे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वापत्तिः अत्र पूर्वत्रासिद्धत्वाश्रयणे तस्मादित्येव लिङ्गम् अथ मित्त्वसामर्थ्यं नुटि कर्त्तव्ये नुम्करणसामर्थ्यादित्यर्थो नकारस्यादेशे कर्तव्ये तत्सामर्थ्यादिति वाच्यम् तथायुक्तः पुंसि णा इत्यत्र नुमो नकारादेशस्य चारितार्थ्यात् शसः शकारस्योरण्रपरसूत्रस्थभाष्यरीत्या शसः परपरत्वाच्चस इत्यस्यावयवषष्ठी प्राप्ति र्बोध्या किञ्च मित्त्वसामर्थ्यादकः शसोऽपि परे नुम्स्यादित्यर्थे ऽकएव नुमापत्तौ रूपासिद्धिः तस्मादिति कृते तु न दोषः शसोऽचोऽसम्भवादचीति न सम्बध्यते तस्मादित्युत्तरस्येत्यस्य प्रवृत्त्याऽचो नुमित्यर्थे दोष इति चेत्तर्हि रामानित्यादौ णत्वदोषस्य वारणं निर्देशाश्रयणे प्रतिपत्तिक्लेश इति सूचकाराशयः शसो नः पुंसीत्यपि न युक्तम् अकः शसवयवे ऽचि पूर्वपरयोरचि नत्वादेशापत्तेः एकः पूर्वपरयोरित्यधिकारे पञ्चमीसप्तमी च नैकस्यानित्यत्वबोधिकेति सिद्धान्तात् अचीति निवृत्तौ

तु तव प्रमाणन्नास्ति भाष्ये तस्मात्किं एताम् गा
इति न्यासान्तरे दोषान्तरोपलक्षणमिति मम दोषो
न यत्तु णौमादेश इत्युक्तम् तत्र णौ इत्युक्ते सर्वा-
देशे सिद्धे णित्वं व्यर्थम् अथ णौमादेशस्तर्हि संहि-
तायामष्टाभ्यो औरित्युक्ते गौरवमसंहितायामष्ट-
टाभ्यः औ इति गौरव मेव औशिकर्तव्ये जश्श
सोरनुमीयमानं यद्यपि बहिरङ्ग तथापि नु-
मागमएव बहिरङ्गोऽर्थस्य पुंस्त्वस्याधिक्येनापे-
क्षत्वात् अर्थकृतबहिरङ्गत्वं नास्तीति तत्त्वप्रका-
शिकायां दूषितमेव किञ्च नुमि कृते अनगौर-
वसुकारमकारयोरित्संज्ञा कर्तव्या मिदच इत्य-
स्योपस्थित्या ऽचःपरत्व बोधनीय संयोगान्तलोपे
पदसंयोगसंज्ञा अपेक्षते इति पाणिनेरनियोक्ता
न दृश्यत इति युज्यताम् यदि तस्मादित्यस्य प्र-
त्याख्याने ऽतिभारस्तर्हि शसोन. पुंसि इत्यचा-
कोदीर्घ इति पूर्वसवर्णइति चानुवर्त्य पञ्चम्या-
विपरिणम्याकः पूर्वसवर्णदीर्घात्परस्येति व्याख्या
यता किमनेन तस्मादित्यनेनेति तत्त्वप्रकाशि-
कायां स्पष्टम् ॥ २२ ॥ हल्ङ्याब्भ्योदीर्घात्सुति-
सीति अत्र मनोरमायां हल्ङ्यापश्चोरित्येव सू-
त्रयितुमुचितम् तत्र शब्दरत्ने तु इद तिस्योरप-
लक्षणमन्यथा विभाराज्यमिति न सिध्येत् अवि-
भर स इति स्थिते हल्ङ्यादिसंयोगान्त लोपे-

रोरीति लोपे संयोगान्तलोपस्य पूर्वत्रासिद्धत्वात् ढ्रलोप इति दीर्घो न स्यादिति चेत् अत्र ग्रन्थः शेखर विरुद्धत्वाच्च हि अजर्घाइतिभाष्यप्रयोगात्पूर्वत्रासिद्धमित्यत्र पूर्वपदे नलोपसुब्स्वरसंज्ञातुग्विधिकृत्साधुत्वं स्यादिति चेत् तर्हि असति पचे लोकाराद्रिति प्रकृतौ तु तिलोपेऽस्यासति स्थिते तत एव साधुत्वं न भाष्यप्रयोगेण साधुत्वस्य सति पचे लोकारात् नासूयाकर्तव्या यत्रानुगमः क्रियत इति पंक्तिविंशतीतिसूत्रस्य भाष्यादिति परिगणिताः वस्तुतस्तु शेखरोक्तः सम्यगेव पितृराज्यमित्यत्र सूत्रकारसिद्धान्ते ऽपि संयोगान्तलोपस्यासिद्धत्वाद्रोर्यौन प्राप्नोतीति रोरीतिलोपस्याश्रयासिद्धत्वेऽपि संयोगान्तलोपस्यासिद्धत्वेनोक्तभाष्यप्रयोगेणैव यद्वा न सुन इत्यत्र नेति इत्येवकर्तव्ये सुयश्च योगविभागार्थं नेति सुने ति क्वचिदसिद्धत्वं ति व्याख्याय प्रयोगार्थं निषिद्ध नातिप्रसंगः चात्रयोगविभागार्थं नेतिसुनेति तदा सिद्धार्थत्वात् अतएव प्रत्ययः पर इति रेफस्य लोपः विसर्गः अजर्घा इति भाष्यस्याश्रयासिद्धत्वे व्युपपत्तिरस्ति अथवा स्वल्पमप्यत्रैव तात्पर्यं तस्य दोषः संयोगादि इत्यादिवार्त्तिकानियोगविभागसिद्धानीति तत्त्वम् ॥ २४ ॥ वट्वजइलन्तास्याचः इलन्ताघ् ढ-

त्येव सिद्धं वदव्रज्योर्ग्रहणं अतो हलादेरिति वैक-
ल्पिकदीर्घबाधनार्थं ननु वदव्रज्योरच् इत्येवास्तु
अज्ग्रहणसामर्थ्याद्धलन्तस्याच् इत्यर्थो भविष्यति
वदिव्रज्योरवयवस्याच् इति नार्थः अतोल्लान्तस्ये-
त्यतोऽत इत्यनुवृत्त्यैव सिद्धे तस्य वैयर्थ्यात् अन-
न्तार्थत्वन्तु नास्ति सिचिवृद्धिः परस्मैपदेष्वित्येव-
सिद्धेः अनिगन्तार्थमिदमित्यपि न अचिकीर्षदि-
त्यत्र स्यक्षोपाविति वचनादतोलोपविधानात् अ-
पासीदित्यत्र वृद्धौ नास्ति विशेषः अजन्तानामि-
त्यनेन सिद्धासम्भवात् तदेतदाहुः भाष्यकाराः ए-
वन्तर्हि इदमेव हल्ग्रहणमनुसृतं हल्ग्रहणमनन्त्या-
र्थम् अज्ग्रहणमनिगर्थमिति अभांक्षीदरांक्षीदि-
त्यादिसिद्धाच्चान्तार्थाश्रयोऽपि विध्यर्थमित्यर्थः
अन्यथा अकासीदित्यादावप्यतिप्रसङ्गः स्यात् त-
दुक्तं भाष्ये सिद्धाति व्यवाये तु न भवति यदि सि-
चानन्तर्य्यं विशेष्यत इति ॥ अथानिगर्थमिति भा-
ष्यस्यायमर्थः अग्ग्रहणाभाव इक्परिभाषोपस्थाने
अभैत्सीदित्यादावेव स्यान्नतु अभांक्षीदित्यादावि-
ति अन्तग्रहणन्तु स्पष्टार्थमन्यथा हलोऽच् इत्युच्य-
माने अजन्ताङ्गस्य हलः स्थाने वृद्धिः स्यादि-
त्ययमप्यर्थ आशंक्यत इति कैयटे स्पष्टार्थम् अथैव
विचारोऽनुचितश्शेखरे स्पष्टत्वात् ॥ २५ ॥

न पदान्ताट्टोरनाम् विशेष्यविशेषणभावादेवा-

न्तपदे लाभे स्पष्टार्थं तदिति शेखरः पदान्तादिति-
सूत्रे शेखरे अन्तग्रहणं पदान्तकार्य्यार्थं अन्यथा
पदविधित्वापत्त्या समर्थपरिभाषोपस्थितेरसमर्थे
तिष्ठति कुमारी छत्रं हर देवदत्तइत्यादौ न स्या-
दित्युक्तम् तस्यायं भावः न पदान्तादित्यत्र तु न
समर्थपरिभाषोपस्थितिः पञ्चमीमित्यत्र तदुपस्थित्यै-
व न पदान्तादित्यस्यानुपस्थित्यानामित्यस्य वै-
यर्थ्यापत्तेः समर्थपरिभाषां प्रति विधायीस्थएव
न पदान्तादिपदस्यासित्वा न्न तस्या अत्रोपस्थि
तिरिति न पूर्वापरविरोधश्चशेखरस्येति पण्डिताः
न पदान्तादित्यत्र येनविधिरित्यस्यानित्यत्वबो-
धनार्थं मन्तग्रहणम् तेन समासप्रत्ययविधौ प्रति-
प्रतिषेध इत्यादिवार्तिकसूत्रकारेणापि बोधनमि-
ति नापूर्व्वम् किन्तु तिङ्ङतिङ इत्यत्रातिङ्ग्र-
ष्वतिभवति इत्यादौ मा भूदिति ज्ञातम् तत्र तु
समर्थ इत्येव सिद्धं तत्रैकार्थीभाव एव सामर्थ्य-
मित्यतिङितिज्ञापकात्पदकार्य्येऽपि क्वचिदसम-
र्थपरिभाषानुपस्थित्यैव तुकि सिद्धे पदान्तादि-
त्यन्तग्रहणमपि स्पष्टार्थम् किन्तु विशेष्यविशेषणा
भावे कामचारस्यापिबोधनार्थं मन्तग्रहणं तेनोत-
श्चप्रत्ययादसंयोगपूर्वात् उदोष्ठापूर्वस्येत्यत्रोकार-
योः संयोगपूर्वः ऋकारोय ओष्ठापूर्वं इत्यादिव्या-
ख्यातं भाष्ये सङ्गच्छते अन्यथोकारान्तस्यासंयो-

गपूर्वत्वग्रहणे अकारान्तस्यौष्ठापूर्वत्वग्रहणे वा
दाम्बु हि इत्यत्र हेर्लुक् स्यादुकारान्तप्रत्ययस्यासं-
योगपूर्वत्वादुकारो यो ऽसंयोगपूर्व इति व्याख्याने
न दोषः एवं संकीर्णं इत्यत्र धातुर्यकारस्तस्य यो-
ष्ठापूर्वत्वात्यर्थं यथैव स्यान्नापि पूर्वं इत्यत्र स्या-
दिति येनैरपरत्र भाष्ये स्पष्टम् ॥ २६ ॥ ङसिङ-
सोश्च पचङिङसीत्येवसिद्धे ङसग्रहणं स्पष्टार्थ-
मिति पण्डिताः ङिङस इत्युक्तेः प्रत्ययग्रहणात्ता-
पस्या पदान्तादित्यस्य सम्बन्धे हरेस्त्यादौ न स्या-
त् नियमात्पदान्तादेङोऽति पूर्वरूपं चेन्ङिङसो-
ऽकारस्यैवेति पुंसोऽसुङित्ति यमुङित्येकादेशस्या-
सोनुकरणादिच्छाक्यपि अस्यतीतिभवति तस्य
देवदत्तोऽस्यतीत्यादावेव प्रवृत्तिः स्यात्प्रकृतिवद-
नुकरणमित्यतिदेशे नङिङसः सम्भवात् यजह-
रक्षार्थं पचे प्रक्रियादशायां कल्पिते नास्यासो-
ऽर्थवत्त्वाच्च अतएव नमस्कारोत्यत्र नमः पदस्या-
र्थवत्त्वं नोपपदविभक्तिरित्यनेन द्वितीयावारणं न
त्वर्थवत्परिभाषया नमसोऽनर्थकत्वे गतिसंज्ञा-
विरहान्नमस्पुरसोरिति सत्वस्यैवानापत्तिः अनि-
नस्मन्ग्रहणेष्वनर्थकस्यापि ग्रहणाच्च प्रत्ययाप्रत्य
ययोरिति प्रत्ययङिङसोर्ग्रहणन्तु न सा परिभाषै-
व नास्ति कथमन्यथाचार्यो ङसोर्ग्रहणं कुर्यात्
ङसिचेत्यपि न युक्तम् ङसश्च सचेति द्वंद्वेप्रत्येका

ष्यप्रामाण्येनाचाकचोऽनभिधानमेवेति पण्डिताः वस्तुतस्तु समः सम्रीति सूत्रे ऽकचोऽभिधानकथनं भाष्यप्रामाण्येन नोपलभ्यामहे किन्तु इद मोऽण्वादेशे ऽयनुदात्त इति सूत्रे भाष्ये विचित्रा तद्वितवृत्तय इत्यकाच् न ज्ञायत इत्युक्तम् तद्भाष्यप्रामाण्येनाचाकचोऽभावे सिद्धिरयुक्ते कृपाविशेषोक्तिः शेखरस्य युक्तैव किंच सम्यगर्थसशब्दे कुत्सासम्भवोऽपि नास्ति सूत्रकारेण तु समिष इयं विष्वग्देवयोरित्यतष्टे रित्यनुवृत्तिर्माभूदिति कृतम् यदा तु टेरित्यनुवर्त्य सम इत्युच्यते तदा न किञ्चिद्दुष्टमिति तत्त्वप्रकाशिकायां स्पष्टम्॥३८॥

सार्वधातुकार्द्धधातुकयोः ननु पिदार्द्धधातुकयोरित्येव कर्तव्यमार्द्धधातुकसाहचर्यार्द्धातोरित्युक्तार्थं विहितस्य पितोग्रहणात्सुलु इत्यादौ न दोषः सार्वधातुकमपिदिति सूत्रं मास्तु समाधान साहचर्यमनित्यत्वज्ञापनार्थत्वं सूत्रस्येति कृत्वोर्थग्रहणं सूच इति न्यासेन शेखरे खण्डितमेव॥ फलन्तु सिजभ्यस्तविदिभ्यश्चेत्यत्र सिच साहचर्यमनादृत्याभ्यस्तात्परस्य ङित् सम्बन्धिनो लङस्थानिकस्यापि झेर्जुसिद्धोऽदद्‌ बभोभूरिति पण्डिताः वस्तुतस्तु सार्वधातुकमपिदिति नसादीनां ङित्त्वार्थं तेन इतोद्य इत्यादावनुनासिकलोपः शविद्यादिषु सम्प्रसारणादि संस्यति न

च तिङः पित्संज्ञाविज्ञानादपि तिङ् दुर्लभ इति
वाच्यम् तिङ्संज्ञाविधावौपदेशिकपित्त्वस्य साम-
र्थ्येनाश्रयणात्सार्वधातुकप्रदेशे तु पिद्ग्रहणमेवा-
स्तु किञ्च अपिद्ग्रहणमसंयोगाल्लिट् किदित्युत्त-
रार्थमपि वाच्यम् पिदार्द्धधातुकयोरिति तु पि-
तिङ्ङितीति निषेधादौपदेशिकपित्त्वेव प्रवर्त्तते-
ति न दोषः कैश्चिदिति चेत् प्रदेशेषु पित्पदेन
कृत्रिमस्यैव ग्रहणेनाभ्यस्तस्यापि पिति इति नि-
र्देशेपि इत्संज्ञको यः पिदौपदेशिक इत्यर्थ स्या-
वश्यकत्वेपि शास्त्रे उभयगतिविज्ञानात्तस्यानु-
दात्तेङिदुपदेशात्सार्वधातुकमिति पिदित्यु-
च्यमाने एवं श्नुचोऽपिति वदादिभ्यः पिति गुरु-
त्त्वसम् यमः पिति यक् पिति चक्रत् पितो दीर्घ
इत्यादौ संदेहापत्तेरेव स्यात् कृत्रिमपितो ग्रह-
णे सत्यपि चेत् ङीत्वस्यैवाभावे सुप्तिङन्तस्येति
पदत्वानापत्तिस्तथा च हरिहीत्यादौ तिङ्ङतिङ
इति निघातानापत्तिः उभयोः संज्ञासंज्ञयोर्दृ-
ष्टं पूर्वं पवेत्युक्तम् अथ पित्संज्ञा न क्रियते सार्व-
धातुकप्रदेशेषु सञ्ज्ञिनिर्देशोऽस्तु तिङ्शिदिति सा-
र्वधातुकसंज्ञायान्तु तिङ्शब्दादार्द्धधातुकयोरि-
त्यादि आर्द्धधातुकतिङ्शिदिति वक्तव्यम् लिट्
चेति वचनलिङादेशस्तिङार्द्धधातुकत्वं यत्र शि-
तोसंभवस्तत्र तिङ्ग्रहणमेव सार्वधातुकस्यत्वे का-

ष्यप्रामाण्येनाचाकचोऽनभिधानमेवेति पण्डिताः वस्तुतस्तु समः समौति सूत्रे ऽकचोऽभिधानकल्पनं भाष्यप्रामाण्येन नोपलभ्यामहे किन्तु इदमोऽन्वादेशे ऽशनुदात्त इति सूत्रे भाष्ये विचिचास्वञितहस्तय इत्यकच् न ज्ञायत इत्युक्तम् तद्भाष्यप्रामाण्येनाचाकचोऽभावे सिद्धित्युक्ते रूपाविर्भावोक्तिः शेखरस्य युक्तैव किंच सम्यगर्थसशब्दे कुत्सासम्भवोऽपि नास्ति सूत्रकारेण तु समियङ्यां विष्वग्देवयोरित्यत्राद्रेरित्यनुवृत्तिर्माभूदिति कृतम् यदा तु टेरित्यनुवर्त्य सम इत्युच्यते तदा न किञ्चिद्दुष्टमिति तत्त्वप्रकाशिकायां स्पष्टम्॥२८॥

सार्वधातुकार्द्धधातुकयोः ननु पिदार्द्धधातुकयोरित्येव कर्तव्यमार्द्धधातुकसाहचर्यान्ङ्गातोरित्युक्तार्थं विहितस्य पितोऽर्थग्रहणात्सुलु इत्यादौ न दोषः सार्वधातुकमपिदिति सूत्रं मास्तु समाधानं साहचर्यमनित्यज्ञापनार्थत्वं सूत्रस्येति कृत्स्नोऽयंग्रन्थः सूप इति न्यासेन शेखरे खण्डितमेव॥ फलन्तु सिजभ्यस्तविदिभ्यश्चेत्यत्र सिच् साहचर्यमनादृत्याभ्यस्तात्परस्य ङित् सम्बन्धिनो लङ्स्थानिकस्यापि झेर्जुस्सिद्धोऽदुदु यवोभूरिति पण्डिताः वस्तुतस्तु सार्वधातुकमपिदिति नसादीनां ङित्त्वार्थं तेन हतोऽह्य इत्यादावनुनासिकलोपः यच्छिण्यादिषु सम्प्रसारणादिसंस्थिति न

च तिङः पित्संज्ञाविज्ञानादपि तिङ् दुर्लभ इति वाच्यम् तिङ्संज्ञाविधावौपदेशिकपित्त्वस्य सामर्थ्यंनाश्रयणात्सार्वधातुकप्रदेशेतु पिद्ग्रहणमेवा-स्तु किञ्च अपिद्ग्रहणमसंयोगाल्लिट् किदित्युत्तरार्थमपि वाच्यम् पिदार्द्धधातुकयोरिति तु पितिङितीति निषेधादौपदेशिकपित्स्वेव प्रवर्त्तेतेति न दोषः कैश्चिदिति चेत् प्रदेशेषु पित्पदेन ज्ञाचिमस्यैव ग्रहणेनाभ्यस्तस्यापि पिति इतिनिर्देशेपि इत्संज्ञको यः पिदौपदेशिक इत्यर्थं स्याग्रहकत्वेपि शास्त्रे उभयगतिविज्ञानात्तस्यानुदात्तं ङिङदुपदेशात्सार्वधातुकमिति पिदित्युच्यमाने एव श्रुवोऽपिति रुदादिभ्यः पिति तुरुस्तुसम् यमः पिति यक् पिति यङत् पितो दीर्घं इत्यादौ संदेहापत्तं रेव स्यात् ज्ञाचिमपितो ग्रहणे सत्यपि चेत् ङीत्त्वस्यैवाभावे सुसिङ्त्वस्येति पदत्वानापत्तिस्तया च कदिङीत्यादौतिङ्ङतिङ इति निघातानापत्तिः उभयोः संज्ञासंज्ञयोर्ग्रहणं पूर्वं एवेत्युक्तम् अथ पित्संज्ञा न क्रियते सार्वधातुकप्रदेशेषु सचित्रनिर्देशोऽस्तु तिङ्शिदिति सार्वधातुकसंज्ञायान्तु तिङशब्दादार्द्धधातुकयोरित्यादि आर्द्धधातुकतिङशिदिति वक्तव्यम् लिट् चेति वचनलिङादेशस्तिङार्द्धधातुकत्वं यत्र शितोसम्भवस्तत्र तिङ्ग्रहणमेव सार्वधातुकस्थले का-

ये सार्वधातुकमपिदिति तिङ्शिदपिदिति वक्तव्यम् । तिङ्शिदिति यगित्यत्र धातोरित्युक्तार्थं विहितविङ् शितिपदविधानात्सिद्धोदुह इत्यादौ कर्मणसि न दोषः शिदार्धधातुकयोरित्यत्रार्धधातुकसाहचर्याद्दोह्वीमित्यादौ न गुणः अपितः शितो ङित्त्वं च वेविङीतीति गुणो दुर्वारइति वाच्यम् । एवं तर्हि धातोस्तिङः शिदपिदिति वक्तव्यम् विहितविशेषणत्वाददोष इति केचिद्वदन्ति॥२८॥

इदुदुपधस्य चाप्रत्ययस्य षत्व सूत्रे एकादेशशास्त्रनिमित्तविसर्गस्यासे ऽनेन सूत्रेण न षः कस्कादिषु भ्रातुष्पुत्रस्य पाठादिति च पूर्वपक्षः षत्वतुकोरसिद्ध इति षत्वे कर्तव्ये एकादेशस्यासिद्धत्वादिदुदुपधस्येत्यस्याप्रवृत्तेः कस्कादिपाठसामर्थ्यात्षत्वमिति भावः ऊपेत्यादौ शंकैवनास्तीति तत्र पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वमिति भाष्यसिद्धान्तात् तेन ज्ञापकत्वं सम्यगेव तेन परिवीषुपरिजीषु इत्यादौ षत्वमिति व्याख्येभ्यां क्विपि यजिव्येति सम्प्रसारणे पूर्वरूपे हल् इति दीर्घे आदेशप्रत्यययोरिति सुपः सस्य षत्वं कर्तव्ये पदान्तपदाद्योरेकादेशाभावात् पूर्वरूपस्य नासिद्धत्वमन्यथाऽकारेण व्यवधानादिणः परत्वाभावात्सस्य षत्वं न स्यात् यथाह्वेष्वच मित्यत्रापि सिद्धएकादेश इति चक्षेपेति तुक् न च

स्नुतस्तु इग्यणः सम्प्रसारणमित्यत्र साधः सम्प्रसारणमित्येव सूत्रमस्तु सम्प्रसारणाच्चेति मास्तु हृषेच्छत्र धजयेच्छत्रमित्यत्र तुक् निवृत्त्यर्थः । पत्वतुक्पदान्तपदाद्योरेकादेशो सिद्ध इति नियमो स्वीकार्यः एवञ्च भ्रातुष्पुत्रशब्दः कस्कादिषु विध्यर्थ एव न ज्ञापक इति समाधानं विभावयन्तु सुधिय इति पण्डिताः । वस्तुतस्तु हृषेच्छत्रमित्यादावसिद्धत्वे पदान्ताद्वेति नियमं विना न सिध्येत्तो नियमोऽयमावश्यक एतन्नियमाश्रयणात्सम्प्रसारणङीप्सु सिद्ध एकादेश इति वक्तव्यमिति वार्तिकं कर्तव्यं भवति शकहूषु परिवीषु वृषेच्छत्रं धजयेच्छत्रं इति वार्तिकोदाहरणानि नियमे एव सिध्यन्ति अत्र नियमे शंकितं भाष्ये यदि पदान्तपदाद्योः एकादेशोऽसिद्धस्तर्हि कोपधीक्षूधीत्यत्रासिद्धत्वाभावे पत्व प्राप्नोति असिपूर्वसवर्णदीर्घे तस्य रुत्व विसर्गे कः कृत इति ह्राधिकृतेष्वनिदितेरिति सत्वे तत्र समाहितं भाष्यकारेणैव कस्कादिषु भ्रातुष्पुत्रस्य पाठादेकादेशात्परस्य न पत्वमिति ज्ञापकस्य सजातीयापेक्षया कुप्वोः परत एव न पत्वं तेन शकहूमेपरिवीष्वेत्यादावदोषः पत्वतुकोरसिद्ध इत्यत्र पूर्वपदान्तपरपदाद्योरेकादेशोऽसिद्ध इति व्याख्यातं तत्रैव भाष्ये तेन पदान्तपदाद्योरिति नियमे सि-

हे सिद्धं तनच्छत्र मित्यादिपदशब्देन पदयोग्यो ऽपि गृह्यते प्रधीत्य प्रेत्येति भाष्योदाहरणात् परिविपूर्वस्यैवः क्विबन्तस्य तुगभावः परिवीयेति ल्यवन्तो च न तुक् अनभिधानात् तदुक्तं प्रत्यय लक्षणमित्यत्र भाष्ये । वक्ष्यति चात्र परिहारं इहापि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यतीति आशयमाह कैयटः सति प्रत्यये तत्कार्यं भवति तल्लुप्तेऽपि भवतीति सूत्रार्थः परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टो न तुगिति परिवीरित्यत्रापि दीर्घ एव भवतीति एतेनाधीत्य प्रेत्येत्यत्र तु दीर्घो दृष्टो तेनात्र तुक्यसिद्ध इति युक्तैव अतएव चौपधीत्यत्रासिद्धत्वान्न च इति भाष्ययोरविरोध इति केचित्॥ ३०॥

आडजादीनाम् न चाबादीनामपि लङ्लुङ्लृङ्क्ष्वित्यडेवास्तु किमनेन सूत्रेण आटश्चेति अटश्चेत्येवास्तु अस्तपोऽसन्निव्याद् गार्ग्यगालवयोरिति लपोऽडागमे वृद्धिस्तु न अटश्चेत्यत्रोपसर्गाद्दति धातावित्यतो धातावित्यपकृष्यते तेन धात्ववयवेऽच्येव वृद्धिरिति न दोषः आगुदार इत्यत्र तु अडिति वक्तुमशक्यः वहुश्रेयस्यै पत्ये इत्यादौ वृद्धिबाधकमतो गुण इति पररूपं मा भूदिति अड्विधानन्तु वहुश्रेयस्यामित्यादौ नुडबाधनेन चरितार्थमटश्चेति धात्ववयवेऽच्येव प्रवर्तते धा-

टि सति तु वृद्धिरेचीति वृद्धिरित्याटश्चेति सूत्रस्थ-
शेखरग्रन्थः अट्धातोश्शेखरे तु आटश्चेत्येवास्तु
आतीदैधतेत्यादौ तु न दोषः अतोगुणे नाटइति
न्यासेन सिद्धत्वात् एवञ्च बहुश्रेयस्यै इत्यादावा
टश्चेति वृद्धिं विधाय पररूपबाधकमुभयथा बहुश्रे-
यस्यै इत्यादौ पररूपं स्यादेव अणुद्या इत्युक्तं स्या-
त् याटोः दीर्घान्तत्वान्नास्ति पररूपशंका तथापि
परं रूपं परत्वात्स्याद्बहुश्रेयस्यै इत्यादौ तदर्थ-
माणुद्या इति वक्तव्यमटश्चेति चकारेण पुनर्वृद्धि-
विधानं बाधकबाधनार्थं तेनार्थेनैवाटः पररूप-
माचं न इति न्यासेऽपि तदेव ओमाङोश्चेति
न वक्तव्यमिति भाष्योक्तेरुभययाऽस्योमाङ्भ्याट
इति नारम्भणीयमिति पण्डिताः नमाङ्योगे इ-
ति सूत्रे आङ्जादीनामिति प्रत्याख्यानपरभाष्य
त्वक्जादीनामटासिद्धं वृद्ध्यर्थमिति चेदटः अप्यपी
हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् कथमिति चे-
द्योगविभागः करिष्यते अटः अचिवृद्धिर्भवति ततः
उपसर्गादृति वृद्धिर्भवति ततो धातावित्युभयोः
शेषः अतो भाष्यात्ककारप्रत्याख्यानं स्पष्टमायाति
आटोदित्यादौ पररूपबाधकोक्तम् पररूपंगुणेनाट
इति अनेनैव सिद्धे उस्योमाङीति न वक्तव्यं भव
तीति सदोमाङोरसि तत्समःमिति बहुश्रेयस्यै इ-
त्यादौ वृद्धिस्तु इति से पररूपे निषिद्धे प्रतिवस्य

काभावाद्वृद्धिरेचित्येव अत्र पक्षे आगूढा इति व
क्तुं शक्यः श्रटश्चेति चकार श्रोमाङोश्चेति चकार
उस्योमाङ्क्षिति पररूपनिषेधार्थं च वार्तिकं नाश्र-
यणीय भवति श्रटश्चेत्यत्र भाष्यरीत्या तु श्राट
इति षष्ठ्यन्तकारेण पररूपवारणे सिद्धे उस्यो-
माङ्क्षिति न कर्तव्य धात्वपकर्षेणाटश्चेत्यस्या
पकर्षेणाप्राप्त्या आगूढा इति दीर्घोच्चारणमावश्य
कं वृद्धिरेचीति बाधित्वापररूपापत्तेः न चाङ्ग्रहा-
नसामर्थ्यात्पररूपाभाव. शक्यः अगूढा इति व-
क्तव्यं नाङ् इति गौरवान्न कर्तव्यमित्याहु । केचि
त्तु वा सुप्यापिशलेरित्यत्रापि शलियङ्ग्रहणेनैव सिद्धे
वाग्रहणमट इत्यत्रानुवृत्त्यर्थं व्यवस्थितविभाषार्थं
तेनास्वपोऽस्सनवकुर्वीयस्यै इत्यादि सिद्धं धात्वप
कर्षो छन्दार्थं चकारकरणं दीर्घोच्चारणमाट इति
न कर्तव्यमेव एवञ्चाटस्याटो दीर्घोच्चारणमागूढा
इत्यत्र दीर्घोच्चारणमप्यनावश्यकमेव व्यवस्थितवि
भाषया सिद्धेः यद्वा शरावयवागुल्यादौ इस्तपा
द, भ्रु, खरित्यादिनिरूढव्यवहाराद्याद् स्याटोऽका
रोकारस्याप्यवयव इत्यद् इति हृदि. सिद्धेवेत्याहुः
न चाङ्घादीनामिति छन्दसि हलन्तं अपुनश्च
थाविरयादौ दीर्घार्थमिति वाच्यम् छन्दोर्थं यद्
न दीर्घो दृश्यत तद्यथा पुरुषो नाहं इति भाष्ये
समाधानात् न चैषाम्त्योर्लोङ्क्षौ इणो यणिति

यणिति असोरल्लोप इत्यल्लोपे अटि यायन्नासन्नि
ति न सिद्धेदिति वाच्यम् इणस्त्योरन्तरङ्गत: इ
डागमेऽट इति वृद्धौ नास्ति दोष: इणो यणित्यनै
रनेकाच इत्यत्र एरित्यपकृष्ट: असोरल्लोप इत्यचा
दिति तपकरणात् पश्चादयणल्लोपयोरप्राप्तेन चा
गमेऽपि यणादाङ्गमिति न्यायात्प्रागेव यणल्लोपौ
प्राप्नुत: इत्याडुचनमिति वाच्यम् इणस्त्योरन्तर
गत इति भाष्यात् श्नुभ्रुवोः श्नूडिति सत् श्नुनिर्देशाच्चे
यमनित्याऽन्यथांगत्वात्स्य आदेशे तुकोऽप्रा-
प्त्यास निर्देशो व्यर्थं स्यादिति भाष्ये ध्वनितम्।२१।

भूवादयो धातव: क्रियावाचिन: किम् या:
पश्यति न वास्य याशब्दस्य लाक्षणिकत्वान्न धातु
संज्ञेति वाच्यम् भ्वादिषु लाक्षणिकानामपि च
क्षत्यादीनां दर्शनेनैतद्विषये तत्परिभाषायाऽप्रवृ
त्ते: नकारजावनुस्वारपञ्चमौ झलि धातुषु सका
रजश्चकारस्यैत् षाट्टवर्गस्तवर्गज इत्यभियुक्तोक्तेरि
ति मनोरमोपरि शब्दरत्नग्रन्थ: यत्नार्यं पूर्वपक्ष:
धातुसंज्ञाप्रति अनुस्वारसवर्णादीनामसिद्धत्वेन प्र
तिपदोक्तस्यैवासम्भवे न लाक्षणिकपरिभाषया
पश्यतीत्यत्र दोष इति शब्दरत्नग्रन्थोऽसङ्गत: किञ्च
क्रियावाचिन. किमित्यस्य वा करोति वा भव
तीत्येव प्रत्युदाहरणं सम्भवति वाशब्दस्य धातुत्वे
ऽधातुरिति निषेधात्प्रातिपदिकत्वाभावे सुपोऽनु

त्पद्यापदत्वाभावात्तिङ्ङतिङ इति निघातो न स्यात् अत्र समाधान अर्थवत्सूत्रेऽधातुग्रहणस्य त्यागेन वा करोतीत्यादावदोषः न चाहन्नित्यत्रापि प्रातिपदिकत्वेन लोपापत्तिरिति वाच्यम् न लोपोऽतिङ् इति न्यासेन वारणात् राजीयतीत्यादौ तु न दोषः प्रत्यासत्त्या तिङन्तनिरूपित यत्पदत्व तन्निमित्तात् परस्य लोप इत्यर्थाद्रामानित्यादौ तु नलोपो न अन्यथा तस्मात्त्सोलोपः इत्येव ब्रूयादिति पण्डिताः वस्तुतस्तु चादिर्शब्दैर्निपातसंज्ञाप्राप्ता सा धातुसञ्ज्ञाया बाधिका भविष्यति धातुसञ्ज्ञा भवतीत्यादौ चरितार्था निपातसञ्ज्ञा चाह प्रभृतिषु चरितार्था वा शब्दस्य परत्वान्निपातसञ्ज्ञैव वा पराऽनवकाशा चेत्याकडारादेकेत्यत्र सूत्र जकालसूत्रे च भाष्ये प्रसिद्धत्वात् अन्तरङ्गत्वन्तु भ्वादिचादिगणसापेक्षत्वेनोभयोः संज्ञयो समसेव गणोपस्थितशब्दबाहुल्येन वहिरङ्गता तु धातुसञ्ज्ञाया एव भुवश्च महाव्याहृतेरित्यत्र महाव्याहृतिग्रहणात् यावत्पुरानिपातयोरित्यत्र निपातग्रहणाच्च निपाते प्रतिपदोक्तत्व्यवस्थितिमनोरमादिग्रन्थकाराशय. प्रातिपदिकसञ्ज्ञाशानिपातसञ्ज्ञावाधिकैवाविरोधात् निपातः प्रातिपदिकमिति विशेषवचनात् रामानित्यादौ सस्य लोपस्तु न हल सस्यनत्वे नलोप तस्यासिद्धत्वाद्राम

मासयतीत्यादौ दीर्घाभावे तुक्कोभावार्थं त्वात्तस्येति
अथ धातुग्रहणप्रत्याख्याने यदा ग्रहणवास्तिचेत्तर्हीत्थं
न्यसतां नलोपः प्रातिपदिकान्तस्ये ति तावतापि भा
षाह्वयताघवादिति तत्त्वप्रकाशिकायां स्पष्टम्॥२२॥
अचःपरस्मिन्पूर्वविधौ अत्र शेखरः अत्रसूत्रे प्रयोगि
योऽच्स्थानिक इत्यर्थो ननु सूत्रे स्थानित्वेनोद्दिश्य
ताच स्थानिक इत्यर्थस्तेनणिलोपादेरनेनस्थानिव
त्त्वं सिध्यति अतएव चङ्परनिर्ह्रासेऽचांतास्मिचि
अवीभवदित्यादि सिद्धार्थो निषेधः सार्थकः इति
दुद्युव इत्यत्र शेखरोक्तप्रयोगः परनिमित्तकत्वाभावे-
पि शपः परनिमित्तत्वेन परंपरया लोपनिमित्तत्वेन
स्थानितयाऽजादेशस्याभावेनस्थानिवत्त्वाभावाच्छप्
त्वमाश्रित्य नगुण इत्युक्तम् तत्पूर्वापरविरुद्धम् वस्तु
तोऽकारस्यैव लुप्त्वेन स्थानिवत्त्वस्यदुर्वारत्वादिति पं
डिताः तत्रेत्थं विरोधपरिहारः साक्षात्परनिमित्त
कता तत्र प्रायोगिकस्थानिता परंपरया प्राप्तायां
सौचस्थानितेति एवमेवाचि प्रयोगाणां गतिर्भवति
नान्यथेति बोध्यम् यत्तु वेविस्त्यत्रस्थानिवत्त्वेन उपा
त्ताच् स्थानिसत्वाचङ् परनिर्ह्रासे इति वचनं वारि
ताख्यदवोष इत्यादौ चरितार्थमतः सूत्रे एवाच् स्था
निक इत्युक्तेः सर्वेष्टसिद्धिरित्युक्तम् तन्न टिपदेनाच
एव ग्रहणादचादेशाभावेनादोषात् अतएव मरुत
माचष्टे मारयतीतिवृद्धीकृतायां नस्थानिवद्भाव इ
ति दिक् ॥२३॥ इत्युत्तरपञ्चावली समाप्ता ॥ श्रीः

त्पयापदत्वाभावात्तिङ्ङतिङ इति निपातो न स्यात् अत्र समाधानं अर्थवत्सूत्रेऽधातुग्रहणस्य त्यागेन वा करोतीत्यादावदोषः न चाहन्नित्यत्रा पि प्रातिपदिकत्वेन लोपापत्तिरिति वाच्यम् न लोपोऽतिङ् इति न्यासेन वारणात् राजीयतीत्या दौ तु न दोषः प्रत्ययसत्वा तिङन्तनिरूपित यत्र पदत्व तन्निमित्तात् परस्य लोप इत्यर्थाद्रामानि त्यादौ तु नलोपो न अन्यथा तस्मात्सोलोपः इत्येव ब्रूयादिति पण्डिताः वस्तुतस्तु चाशब्देनि पातसंज्ञाप्राप्ता सा धातुसंज्ञाया वाधिका भवि ष्यति धातुसंज्ञा भवतीत्यादौ चरितार्था निपात संज्ञा चाह प्रभृतिषु चरितार्था वा शब्दस्य परत्वा न्निपातसंज्ञैव या परानवकाशा चेत्याकडारादे कैत्यत्र सूत्रे अकालसूत्रे च भाष्ये प्रसिद्धत्वात् च न्तरङ्गत्वन्तु स्वादिवादिगणसापेक्षत्वेनोभयोः सं ज्ञयोः सममेव गणोपस्थितशब्दग्राहकत्वेन वहिरङ्ग ता तु धातुसंज्ञाया एव भुवश्च महाव्याहृतेरित्यत्र महाव्याहृतिग्रहणात् यावत्पुरानिपातयोरित्यत्र निपातग्रहणाच्च निपाते प्रतिपदोक्तत्वमप्यस्ति मनोरमादिग्रन्थकाराशयः प्रातिपदिकसंज्ञा या नि पातसंज्ञावाधिकैवाविरोधात् निपातः प्रातिपदि कमिति विशेषवचनात् रामानित्यादौ सस्य लोप स्तु न कृतः सस्य नले नलोपे तस्यासिद्धत्वाद्राम

मासयतीत्यादौ दीर्घाभावे तुकोभावार्थ त्वात्तस्येति
पद धातुयदणप्रत्याख्याने यश्च यड्लवास्तिचेत्तदीत्थं
न्यसतां नलोपः प्रातिपदकांतस्ये ति तावतापि मा
चादयलाघवादिति तत्त्वप्रकाशिकायां स्पष्टम्॥३२॥
अचःपरस्मिन्पूर्वविधौ अत्र शेखरः अत्रसूत्रे प्रयोगे
योऽच्स्थानिक इत्यर्थो नतु सूत्रे स्थानित्वेनोद्देश्य
ताच स्थानिक इत्यर्थेनैणिजोपादेरनेनस्थानिव
त्वे सिध्यति अतएव चङ्परनिर्ह्रासेऽग्लोपिनामि चि
पवीभवदित्यादि सिद्धार्थो निषेधः सार्थकः इति
दुइव इत्यत्र शेषरीतप्रयोगः परनिमित्तकत्वाभावे-
पि अपः परनिमित्तत्वेन परंपरया लोपनिमित्तत्वेन
स्थानितया ऽजादेशत्वाभावेनस्थानिवत्वाभावाच्छप्
त्वमाश्रित्य नगुण इत्युक्तम् तत्पूर्वापरविरुद्धम् वस्तु
तोऽकारस्यैव लुत्वेन स्थानिवत्त्वसद्भावात्वादिति पं
डिताः तत्रेत्थं विरोधपरिहारः साचात्परनिमित्त
कता तत्र प्रायोगिकस्थानिता परंपरया प्राप्तायां
सौत्रस्थानितेति एवमेवहि प्रयोगाणां गतिर्भवति
नान्यथेति बोध्यम् यत्तु वैरित्यत्रस्थानिवत्त्वेन उपा
त्ताच् स्थानित्वात्चङ् परनिर्ह्रासे इति वचनं वारि
ताऽस्तदेवेव इत्यादौ चरितार्थमतः सूत्रे एवाच् स्था
निक इत्युक्तेः सर्वेष्टसिद्धिरित्युक्तम् तन्न टिपदेनाच
एव ग्रहणादजादेशाभावेनादोषात् अतएव मरुत
मावष्टे मारयतीतिवृत्तौकृतायां नस्थानिवद्भाव इ
ति दिक् ॥३३॥ इत्यु तरपद्यावली समाप्ता ॥ श्रीः